सप्तकमुट्टङ्कितम् । अतश्चास्यैव वक्ष्यमाणोपायक्रमेण स्वात्मतया प्रत्यभिज्ञानाज्जीवन्मुक्तिप्रदत्वं प्रयोजनं श्लोकान्तरासूत्रितमपि 'श्रीशम्भुनाथ' इत्यादि-श्लोकेन साक्षादुक्तम् । एतदुद्दिश्य च को नाम न सचेताः परमेश्वरशक्तिपातपवित्रितः प्रवर्तते इत्यस्य प्रवृत्तिनिमित्तत्वं, प्रवृत्तस्याप्येतदुपलब्धौ

'तमनित्येषु भोगेषु योजयन्ति विनायकाः ।'

इत्याद्युक्तेर्विघ्नाः संभवन्ति इत्येतन्निरासाय गणेशवटुकयोः स्तुतिः । 'अर्थितो रचये' इति प्रतिज्ञातायाः प्रक्रियायाश्च

'तन्मया तन्त्र्यते तन्त्रालोकनाम्न्यत्र शासने ।'

इत्यादिवक्ष्यमाणोपजीवनेन तन्त्रालोक इत्यभिधानम् । एवमभिधानाभिधेययोरभिधेयप्रयोजनयोश्च वाच्यवाचकसाध्यसाधनभावलक्षणः संबन्धश्चार्थाक्षिप्तः इत्यनेकवाक्यसंमेलनात्मकमेकमेवादिवाक्यं प्रवृत्तिहेतुतया उक्तम् इति पिण्डार्थः ॥२१॥

---

पं० १४ ख० पु० साधनभावाभावलक्षणेति पाठः ।
पं० १५ ख० पु० संमेलनात्मकमेकमेवेदमादिवाक्यप्रवृत्तिहेतु इत्यादिरूपः पाठः ।

इह यद्यपि सर्ववादिनां मोक्ष एव उपादेयः, तत्प्रतिपक्षभूतः संसारश्च हेयः, तस्य च मिथ्याज्ञानं निमित्तं, तत्प्रतिकूलं च तत्त्वज्ञानम्—इति तत्साक्षात्कारेणैव अज्ञानापगमान्मोक्षावाप्तिः इत्यत्राविवादः, तथापि तैस्तदेकनियतं ज्ञानाज्ञानयोः स्वरूपं न ज्ञातम् इति

'भ्रमयत्येव तान्माया ह्यमोक्षे मोक्षलिप्सया ।'

इत्याद्युक्त्या तदभ्युपगतो मोक्षो मोक्ष एव न भवति—इति दर्शयितुं शास्त्रान्तरवैलक्षण्येन तत्परीक्षणस्य वक्ष्यमाणत्वात्प्राधान्यमपि कटाक्षयितुमुपक्रम एव बन्धमोक्षपरीक्षामुट्टङ्कयति ग्रन्थकारः

इह तावत्समस्तेषु शास्त्रेषु परिगीयते । reiterated
अज्ञानं संसृतेर्हेतुर्ज्ञानं मोक्षैककारणम् ॥२२॥

न चैतदस्माभिः स्वोपज्ञमेवोक्तम्—इत्याह

मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम् ।
इति प्रोक्तं तथा च श्रीमालिनीविजयोत्तरे ॥२३॥

'अज्ञानं' तिमिरं पारमेश्वरस्वातन्त्र्यमात्रसमुल्लासितस्वरूपगोपनासतत्त्वमात्मानात्मनोरन्यथाभिमानस्वभावम् अपूर्णं ज्ञानं, तदेव चाणवं 'मलं', न तु नवमाह्निकादौ निषेत्स्यमानं द्रव्यरूपम् । उक्तं च

'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः ॥'

इति । तच्च कीदृक्? इत्याह—संसार इति । 'संसारस्य'

'भिन्नवेद्यप्रथात्रैव मायाख्यम्............ ।'

इत्याद्युक्तस्वरूपस्य मायीयस्य मलस्य

'संसारकारणं कर्म संसाराङ्कुर उच्यते ।'

इति वक्ष्यमाणनीत्या 'अङ्कुरः' कारणं कार्ममलं तस्य 'कारणं' । तदुक्तं

'मलं कर्मनिमित्तं तु नैमित्तिकमतः परम् ।'

इति श्रीमालिनीविजयोत्तरे प्रोक्तम् इत्येतदधिकारेणैवायं ग्रन्थः प्रवृत्त इत्युपोद्वलितम् ॥२३॥ 19.7.96 (AM)

अज्ञानस्य पौरुषबौद्धात्मकत्वेन द्वैविध्येऽपि इह पौरुषमेव विवक्षितं स्यान्नान्यत् इत्याह

---

पं० १ ख० पु० अज्ञानतिमिरमिति समस्तः पाठः । क० पु० समुल्लासितं स्वरूपेति च व्यस्तः पाठः ।

विशेषणेन बुद्धिस्थे संसारोत्तरकालिके ।
संभावनां निरस्यैतदभावे मोक्षमब्रवीत् ॥२४॥

'विशेषणेन' 'संसाराङ्कुरकारणम् इत्यनेन' नहि दुरध्यवसायरूपं बौद्धमज्ञानं कर्मणः कारणम् अपि तु तत्तस्य[1] – इति कथमेतद्विशेषणं संगच्छतां, तद्धि सति कर्मकारणके शरीरे संभवति तस्य कार्य-करणात्मकत्वात्, बुद्धेश्च करणवर्गान्तःपातित्वात्, अत एवोक्तं 'संसारोत्तरकालिक' इति,

'शरीरभुवनाकारो मायीयः परिकीर्तितः ।'

इत्याद्युक्तेः संसाराच्छरीरादनन्तरभाविनि इत्यर्थः । किं तत्संभावनानिरासेन इत्युक्तं—'एतदभावे मोक्ष-मब्रवीत्' इति । नहि बौद्धाज्ञानमात्रनिवृत्तौ मोक्षो भवेत् यत्तस्मिन्निवृत्ते बौद्धमेव ज्ञानमुदेति' तस्य च शुद्धविकल्पात्मत्वेऽपि

'सर्वो विकल्पः संसारः.................. ।'

इति नीत्या संसाराविर्भावकत्वमेव इति कथमे-तदभावेऽपि एवं स्यात् । यदभिप्रायादितो बाह्यैरपि

---

१ तदिति कर्म, तस्येति बौद्धाज्ञानस्येत्यर्थः, एतत्—बौद्धमज्ञानमित्यर्थः ।

---

पं० १ ख० पु० कथमस्यैतत् इति पाठः ।

'परमार्थविकल्पेऽपि नावलीयेत पण्डितः ।
को हि भेदो विकल्पस्य शुभे वाऽप्यथ वाऽशुभे ॥'

इत्याद्युक्तं, पौरुषे पुनरज्ञाने दीक्षादिना निवृत्ते सति यदि बौद्धं ज्ञानमुदियात् तदा तस्य वक्ष्यमाणनीत्या जीवन्मुक्तिं प्रत्यपि कारणत्वं भवेत्, केवलेन पुनस्तेन न किंचित्सेत्स्यति इत्युक्तप्रायम् । पौरुषं पुनर्ज्ञानमुदितं सत् अन्यनिरपेक्षमेव मोक्षकारणम् । यदुक्तं

'पाशाश्च पौरुषाः शोध्या दीक्षायां न तु धीगताः ।
तेन तस्यां दोषवत्यामपि दीक्षा न निष्फला ॥'

इति । तच्च ज्ञानमात्रस्वभावम्, अख्यात्यभाव एव हि पूर्णा ख्यातिः, सैव च प्रकाशानन्दघनस्यात्मनस्तात्त्विकं स्वरूपं, तत्प्रथनमेव मोक्षः इति युक्तमुक्तम्— 'एतदभावे मोक्षमब्रवीत्' इति ॥ २४ ॥

ननु अज्ञानशब्दस्य अपूर्णं ज्ञानमर्थः इत्यत्र किं निबन्धनं, ज्ञानाभावमात्रमेवास्तु इत्याशङ्क्याह

---

पं० २ ख० पु० शुभे वाप्यशुभेऽथ वा इति पाठः ।
पं० ५ क० पु० केवलेन पुनर्न किंचिदिति पाठः ।
पं० १२ क० पु० युक्तमेतदभावे मोक्षमिति पाठः ।

अज्ञानमिति न ज्ञानाभावश्चातिप्रसङ्गतः ।
स हि लोष्टादिकेऽप्यस्ति न च तस्यास्ति संसृतिः
॥ २५ ॥

कोऽसावतिप्रसङ्ग इत्याह—'स हि' इत्यादि । तद्युक्तमुक्तमज्ञानशब्दस्य अपूर्णं ज्ञानमर्थ इति ॥२५॥

तदाह

अतो ज्ञेयस्य तत्त्वस्य सामस्त्येनाप्रथात्मकम् ।
ज्ञानमेव तदज्ञानं शिवसूत्रेषु भाषितम् ॥२६॥

'अतो' यथोक्ताद्धेतोः 'ज्ञेयस्य' नीलसुखादेः,

'ज्ञेयस्य च परं तत्त्वं यः प्रकाशात्मकः शिवः ।'

इत्यादिवक्ष्यमाणस्वरूपस्य 'तत्त्वस्य' 'सामस्त्येन' तस्य सर्वत्राविशेषात् तदेकघनाकारत्वेन 'अप्रथात्मकं' यत् इदं नीलम् इदं सुखम् इति द्वैतप्रथात्मकत्वादपूर्णं 'ज्ञानं' तदेव 'अज्ञानं' न पुनर्ज्ञानाभावमात्रम् इत्येतच्छिवसूत्रेषु 'भाषितम्' उक्तमित्यर्थः ॥२६॥

तत्र चैतत्कुत्र दर्शितम् इत्याशङ्क्याह

---

पं० ११ ख० पु० वक्ष्यमाणसतत्त्वस्येति पाठः ।
पं० १५ क० पु० शिवसूत्रेषु दर्शितमित्यर्थ इति पाठः ।

चैतन्यमात्मा ज्ञानं च बन्ध इत्यत्र सूत्रयोः ।
संश्लेषेतरयोगाभ्यामयमर्थः प्रदर्शितः ॥ २७ ॥

'संश्लेषेतरयोगाभ्याम्' इति संहितया, अन्यथा च अकारप्रश्लेषविश्लेषाभ्यां, तेन 'ज्ञानं बन्धः, अज्ञानं बन्ध' इति चायमर्थः, इत्यज्ञानशब्दस्य अपूर्णज्ञानाभिधानलक्षणः ॥ २७ ॥

एतदेव व्याचष्टे

चैतन्यमिति भावान्तः शब्दः स्वातन्त्र्यमात्रकम् ।
अनाक्षिप्तविशेषं सदाह सूत्रे पुरातने ॥२८॥
द्वितीयेन तु सूत्रेण क्रियां वा करणं च वा ।
ब्रुवता तस्य चिन्मात्ररूपस्य द्वैतमुच्यते ॥२९॥
द्वैतप्रथा तदज्ञानं तुच्छत्वाद्बन्ध उच्यते ।
तत एव समुच्छेद्यमित्यावृत्त्या निरूपितम् ॥३०॥

इह न किञ्चिदप्यचेतितं भवति इति चितिक्रिया सर्वसामान्यरूपा इति । चेतयति इति चेतनः पूर्णज्ञानक्रियावान्, तस्य भावः 'चैतन्यं' पूर्णज्ञानक्रिया-

पं० १६ ख० पु० पूर्णज्ञानवान् इति पाठः ।

यत्त्वं, तदेव च परमैश्वर्यस्वभावं स्वातन्त्र्यमुच्यते । तदाह 'स्वातन्त्र्यमात्रकम्' इति । स्वातन्त्र्यमेव केवलं स्वातन्त्र्यमात्रकम्, अत एवाह 'अनाक्षिप्तविशेषम्' इति, 'अनाक्षिप्ताः' स्वसहचारिणोऽपि नित्यत्वव्यापकत्वादयो 'विशेषा' भेदा येन तत् । भावप्रत्ययान्तो हि शब्दः सहचारिधर्मान्तरनिवृत्तिमेव ब्रूते, अत एव द्रव्याभिधायिनः शब्दस्य विशेषः । यदाहुः

'धर्मान्तरप्रतिक्षेपाप्रतिक्षेपौ तयोर्द्वयोः ।
संकेतभेदस्य पदं ज्ञातृवाञ्छानुरोधतः ॥
भेदोऽयमेव सर्वत्र द्रव्यभावाभिधायिनोः ।'

इति । 'द्वितीयेन' इति अर्थाद् द्वितीयसूत्रवर्तिना ज्ञानशब्देन, ज्ञप्तिः ज्ञानं, ज्ञायते येन इति ज्ञानं च इति व्युत्पत्त्या 'क्रियां, करणं' च प्राधान्येनाभिदधता 'तस्य'—चैतन्यमात्मा—इत्युक्तस्वरूपस्य, अत एव चेतयते इति 'चित्' चितिक्रियायां कर्ता, तन्मात्रमेव केवलं 'रूपं' यस्य तस्य 'द्वैतमुच्यते' कर्तृ-

पं० ७ क० पु० अत एवेत्याभिधायिनः शब्दस्येति पाठः ।
पं० १० क० पु० भेदस्य परमित्येवंविधः पाठः ।

कर्मणोः कर्तृकर्मक्रियाणां च भिन्नानामवच्छेदकानामागूरणाद् द्वैतप्रथासूत्रणं क्रियते, पूर्णमस्य रूपं नाख्याति इत्यर्थः । 'तत्' तस्मात्संविदद्वैतात्मनः पूर्णस्य रूपस्य अख्यानात् 'द्वैतप्रथा' एव 'अज्ञानम्' अपूर्णं ज्ञानमपूर्णत्वाच्च तदेव अपूर्णं मन्यता-शुभाशुभवासना-शरीरभुवनाकारस्वभावविविधसंकुचितज्ञानरूपतया मलत्रयात्मा 'बन्ध' इति उच्यते, बन्धरूपत्वादेव च तदज्ञानं 'समुच्छेद्यम्'

'मलं कर्म च मायीयमाणवमखिलं च यत् ।
सर्वं हेयमिति प्रोक्तं .................. ॥'

Worth abandoning

इत्युक्त्या हेयमित्यर्थः । नन्वत्र द्वैतप्रथात्मकत्वादपूर्णं ज्ञानमेव अज्ञानम् इत्येतत्कुतोऽवगतम् इत्याशङ्क्योक्तम् 'इत्यावृत्त्या निरूपितम्' इति । 'आवृत्त्या' इति अज्ञानम् इति संहितापाततः पुनरावर्तनेन इत्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥

---

पं० ६ क० पु० भुवनाकारविविधेति पाठः ।
पं० ७ क० पु० बन्ध इत्युच्यते इति पाठः ।
पं० ११ ख० पु० इत्याद्युक्त्या इति पाठः ।

नन्वेवं मोक्षस्य लक्षणमभिधीयताम् इत्याशङ्क्याह

स्वतन्त्रात्मातिरिक्तस्तु
तुच्छोऽतुच्छोऽपि कश्चन ।
न मोक्षो नाम तन्नास्य
पृथङ्नामापि गृह्यते ॥ ३१ ॥

न कश्चिदन्योऽस्ति इति वाक्यशेषः । यदि तुच्छस्तत्पूर्वोक्तनीत्या बन्ध एव स्यात्, अतुच्छश्चेत् पारमार्थिकत्वान्नास्य स्वतन्त्रात्मातिरेकः । यद्वक्ष्यति

'मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः ।
स्वरूपं ह्यात्मनः संवित् .................... ॥'

इत्यादि । किमुक्तं भवति,— इह तावदात्मज्ञानं मोक्ष इत्यविवादः, अतो यदेवात्मनो लक्षणं तदेव मोक्षस्य इति तन्नान्तरीयकत्वादेव अस्य लक्षणसिद्धेः पृथक्लक्षणं न कृतं, अत एव 'नामापि' इति अपिशब्देन लक्षणादेः पुनः का वार्ता इत्यावेदितम् ॥३१॥

---

पं० ७ ख० पु० यतो यदि तुच्छ इति पाठः ।

एवमप्यस्य तद्वैलक्षण्यं कटाक्षीकर्तुं दर्शनान्तरोक्तस्य मोक्षस्य स्वरूपमभिधातुमुपक्रमते

यत्तु ज्ञेयसतत्त्वस्य पूर्णापूर्णप्रथात्मकम् ।
तदुत्तरोत्तरं ज्ञानं तत्तत्संसारशान्तिदम् ॥ ३२ ॥

'यत्' पुनः 'ज्ञेयस्य' कला-तत्त्व-भुवनाद्यात्मनोऽध्वनः यत् 'सतत्त्वम्' ऊर्ध्वोर्ध्वमन्योन्यं च भेदेनावस्थानं, तस्य 'उत्तरोत्तरम्' उपर्युपरिभावेन तत्तद्भुवनाद्युल्लङ्घनक्रमेण तत्तदवच्छेदापगमात् यथायथमतिशयाद् द्वैतप्रथात्मकत्वात् संकुचितत्वेऽपि 'पूर्णापूर्णप्रथात्मकं ज्ञानम्' [उदेति तदधरीकृततत्त्वजालोल्लङ्घनात्

'चतुर्दशविधं[६] यच्च प्रोक्तं संसारमण्डलम् ।'

इत्याद्युक्तेः 'तस्य तस्य' चतुर्दशविधयोन्यात्मनः 'संसारस्य' 'शान्तिदं' तत उन्मोचकमित्यर्थः ।

---

६ चतुर्दशविधत्वं संसारस्योक्तं यथा—

'अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥'

इति ।

निष्क्रान्तः

ज्ञानस्य हि मोचनमेव धर्मः, किंतु संकुचितस्यासंकुचितत्वम् ॥ ३२ ॥

एतदेव दर्शयति

रागाद्यकलुषोऽस्म्यन्तः-
शून्योऽहं कर्तृतोज्झितः ।
इत्थं समासव्यासाभ्यां
ज्ञानं मुञ्चति तावतः ॥ ३३ ॥

4) Knowledge 5) through synthesis or analysis

6) frees in a limited way

'इत्थं' प्रथमार्धनिरूपितस्वरूपं 'ज्ञानं' 'तावतः' परिमिताद् बन्धात्, अर्थात् बौद्धादीन्मुञ्चति इति संबन्धः । तत्र 'रागाद्यकलुषोऽहं भवामि' इति ज्ञानं योगाचाराणाम् । यदाहुः

from limited bondage

माध्यमिकानाम्

'रागादिकलुषं चित्तं संसारस्तद्विमुक्तता ।
संक्षेपात्कथितो मोक्षः प्रहीनावरणैर्जिनैः ॥'

Idealistic view point reviewed

इति । तथा

'प्रभास्वरमिदं चित्तं प्रकृत्यागन्तवो मलाः ।
तेषामपाये सर्वार्थं तज्ज्योतिरविनश्वरम् ॥'

---

पं० १ क० पु० किंतु पदं नास्ति,
पं० १२ ख० पु० संसारस्तद्विविक्तता इति पाठः ।
पं० १५ ख० ग० पु० प्रकृत्या तनवो मला इति पाठः ।

1) Free of tainting influence of (Raga etc)
2) I am void 3) I am above doership
1) is Idealistic 2) is Nihilistic (Baudh) and 3) is Saukhya view

or concentrated meditation
1) through methods of contemplation; 2) by cutting assunder each limitation; 3) anchored in the thought relating to the Ultimate Reality



इति । अयमत्रार्थः — प्रकृतिप्रभास्वरस्य चित्तस्य अनाद्यविद्यावशाद्रागादिभिरागन्तुकैर्मलैरावृतत्वेन संसारात्रिर्भावेपि, भावनाद्यात्मकमार्गानुष्ठानबलात्तत्तदागन्तुकमलप्रहाणेन, आश्रयपरावृत्त्या, अविनश्वरज्योतीरूपस्वरूपाभिव्यक्तिर्मोक्ष इति तदयुक्तं, — भावना ह्यत्र भवद्भिः कारणमिष्यते, सा क्षणक्षयिणां चित्तक्षणानां विशेषमाधातुं नोत्सहते, तस्याः स्थिरैकाश्रयगतत्वेन विशेषाधानक्षमत्वात् । तथाहि — स्थायिनस्तिलादयो भावाः स्थायिभिरेव सुमनोभिर्वास्यन्ते, तथेयमपि स्यात्, अतश्च प्रतिक्षणमपूर्वत्वेन उपजायमानस्य, निरन्वयविनाशिलङ्घनाभ्यासवत्, अनासादितातिशयस्य, चित्तक्षणस्य, प्रभास्वरचित्तक्षणोपजननाय भावना न प्रभवेत् इत्यनया कोऽर्थः । समलाश्च चित्तक्षणाः स्वारसिक्याः सदृशारम्भणशक्तेः स्वसदृशानेव चित्तक्षणानुत्पादयितुं क्षमन्ते, न विसदृशान् प्रभास्वरान् । एवं च चित्तक्षणभङ्गुरत्वान्मलप्रहाणायैव भावना न प्रगल्भेत

---

पं० ७ ख० पु० विशेषमभिधातुमिति पाठः ।

पं० १७ ख० पु० न भावना प्रगल्भते इति पाठः ।

3) being momentary

4) momentary existence of Chitta (here MIND-stuff) (literally consciousness-moment)
5) cannot hold long (or endure to uphold) the special experience because of its fleeting character

इत्याश्रयपरावृत्तेः का वार्त्ता इति कृतं क्षणिकवादिनां मोक्षेण । बन्धमोक्षौ च स्थिरैकादिपक्षे युज्येते, बद्धो हि मोक्षाय प्रवर्तते, प्राप्य च निवृत्तो भवति इति, सन्तानश्चैको न विद्यते, तस्य भेदाभेदविकल्पोपहृतत्वात् । 'अन्तः' संविद्रूपतायामपि 'शून्योऽहं' भवामि इति ज्ञानं माध्यमिकानाम् । ते खलु सर्वभावनैःस्वाभाव्यवादिनः संविदोऽपि नैःस्वाभाव्यान्मिथ्यात्वमभिदधतस्तच्छून्यतायामेव मोक्षमाचक्षीरन् । यदाहुः

'चित्तमात्रमिदं विश्वमिति यादेशना मुनेः ।
तत्त्रासपरिहारार्थं बालानां सा न तत्त्वतः ॥
सापि ध्वस्ता महाभागैश्चित्तमात्रव्यवस्थितिः ।'

इति, तदप्ययुक्तं,—संविदो हि मिथ्यात्वेन स्वतन्त्ररूपापाकरणेऽपि मिथ्यात्वे सत्त्वैव न भवेत्, तस्याः नीलादिवत् परतन्त्ररूपत्वाभावात्, नीलादीनां हि मिथ्यात्वेन स्वतन्त्ररूपापाकरणेऽपि संविदात्मत-

---

पं० १ ग० पु० आशयपरावृत्तेरिति पाठः ।
पं० ४ ख० पु० संतानश्चैकेन विद्यते इति पाठः ।
पं० ७ ख० पु० स्वभाववादिन इति, नैःस्वभावादिति च पाठः ।

याऽस्त्यवस्थानं, संविदि तु स्फुरत्तामात्रसारायां मिथ्यात्वादसत्त्वमेव स्यात् इति न किंचित्स्फुरेत् इति मूर्छैव स्यात् इति। न च संविदः स्फुरत्तामात्र-साररूपाया अपह्नवः शक्यक्रियः इति यत्किंचिदेतत्। अथ

'सर्वालम्बनधर्मैश्च सर्वसत्त्वैरशेषतः ।
सर्वक्लेशाशयैः शून्यं न शून्यं परमार्थतः ॥'

इत्याद्युक्तयुक्त्या ग्राह्यग्राहकभावादिना कल्पि-तेन रूपेण शून्यं, न तु संविदापि इति चेत्, एवं ह्युच्यमाने विज्ञानवादे एवाभ्युपगमः स्यात्, सोऽपि हि कल्पितपरतन्त्रादिरूपशून्यत्वेन

'इत्यन्तःकरणस्यैव विचित्रात्मावभासिनः ।
अविभावितत्त्वस्य विस्फूर्जितमिदं जगत् ॥'

इत्याद्युक्तेर्विज्ञप्तिमेव परमार्थसतीमभ्युपागमत् इति

---

पं० ३ क० पु० सूक्ष्मैव स्यादिति, ग० पु० स्फुरत्तासाररूपाया इति च पाठः ।

पं० ८ क० पु० भावनादिना इति पाठः ।

पं० १३ क० पु० अवभासिततत्त्वस्येति पाठः ।

पं० १४ क० पु० परमार्थमभ्युपागमदिति पाठः । ग० पु० विज्ञप्तमेव परमार्थ-सत्त्वमभ्युपगतमिति पाठः ।

न नवं किंचिदायुष्मतोत्प्रेक्षितम् । तत्र चोक्तो दोषः 'अकर्ताहं भवामि' इति ज्ञानं सांख्यानाम् । ते हि निष्क्रियमेवात्मानमभ्युपागमन्, अन्यथा हि तस्य चैतन्यं न स्यात्—अचेतनानामेव क्षीरादीनां क्रियावत्त्वोपलब्धेः । अयुक्तं चैतत्,—अकर्तृत्वे हि पुरुषस्य अनिर्मोक्षः स्यात्, अकिंचित्करत्वे हि पुरुषस्योत्पन्नेऽपि विवेकदर्शने स्वरूपेणावस्थानं न स्यात्,—प्रवृत्तिस्वभावायाः प्रकृतेरौदासीन्यायोगात्, तं प्रत्यपि पुनः संभावनायाः संभवात् । न च प्रकृतेः 'दृष्टाहमनेन' इति 'न पुनरेतदर्थमहं प्रवर्ते' इत्यनुसन्धानमस्त्याचैतन्यादस्याः — प्रेक्षाकारित्वाभावात् । एवं चेयं कृतेऽपि शब्दाद्युपलम्भे यथा पुनस्तदर्थं प्रवर्तते, तथा कृतायामपि विवेकख्यातौ पुनरपि तदर्थं प्रवर्तिष्यते,—स्वभावस्यानपेतत्वात् । एवमपि कृतमकृतं न भवति — इति संकुचितमपि

---

पं० १ क० पु० चोक्तदोष इति समस्तः पाठः ।

पं० ६ क० पु० उत्पन्नेऽपि प्रकृतिपुरुषविवेकेति पाठः ।

पं० १५ क० पु० अकृतं भवति इति पाठः ।

ज्ञानं बौद्धादीनां निजोचितामर्थक्रियां विदध्यात् । तथाहि बौद्धाः

'एकमेवेदं संविद्रूपं हर्षविषादाद्यनेकाकारविवर्तं पश्यामः ॥'

इत्याद्युक्तयुक्त्या बुद्धिवृत्त्यात्मकं ज्ञानमेव तत्त्वं प्रतिपन्नाः इति बुद्धितत्त्वप्राप्तिरेवैषां मोक्षः । तदुक्तं

'ब्रह्मा तत्राधिपत्येन बुद्धितत्त्वे व्यवस्थितः ।
सर्वज्ञं च तमेवाहुर्बौद्धानां परमं पदम् ॥'

इति । अत एवैषां बुद्धितत्त्वाधोवर्तिनः संसारस्य शान्तिः । एवं च 'ज्ञानं मुञ्चति तावतः' इति युक्तमुक्तम् । सांख्याश्च सुखदुःखाद्यात्मकप्रकृतिपृथग्भावेन पुंस एव स्वरूपेणावस्थानं तत्त्वं प्रतिपन्नाः इति पुंस्तत्त्वप्राप्तिरेवैषां मोक्षः । तदुक्तं

'पौरुषं चैव सांख्यानां सुखदुःखादिवर्जितम् ।'

इति । नैरात्म्यदृष्टेश्चात्मदृष्टिर्विशिष्यते, इति सांख्यानां बौद्धेभ्यः पूर्णप्रथात्मकं ज्ञानम् इत्येषां बुद्धितत्त्वोर्ध्ववर्तिपुंस्तत्त्वप्राप्तिः । एवं च पूर्णप्रथात्मकमु-

---

पं० ५ क० पु० प्राप्तिरेषां इति पाठः ।
पं० ६ ख० पु० ब्रह्मैवात्राधिपत्येनेति पाठः ।

त्तरोत्तरं ज्ञानम्, इत्यादिः पूर्वसूत्रप्रतिज्ञातोऽर्थो निर्वाहितः। एवं सांख्यपातञ्जलयोः प्रकृतिपृथग्भावेन पुंज्ञानस्य साम्येऽपि सांख्येभ्यः पातञ्जलानामीश्वरप्रणिधानात् तद्विशिष्यते, इति तेषां पुंस्तत्त्वोर्ध्ववर्तिनियतितत्त्वप्राप्तिरुक्ता।

'षड्विंशकं तु देवेशि योगशास्त्रे परं पदम्।'

इति। एवं च मौसुलपाशुपतादीनामपि यथायथं ज्ञानातिशयादूर्ध्वोर्ध्वतत्त्वावाप्तिः परं पदम् इति। तदुक्तं

'मौसुले कारुके चैव मायातत्त्वं प्रकीर्तितम्।'

इति। तथा

'व्रते पाशुपते प्रोक्तमैश्वरं परमं पदम्।'

इति। तत्रैवं बौद्धादीनां मायीयादेव मलादंशांशिकया, मौसुलानां कार्मादपि, पाशुपतानाम् अनात्मनि आत्माभिमानात् आणवादपि मलान्मोचकं ज्ञानम् इत्युक्तं 'समासव्यासाभ्याम्' इति ३३॥

---

पं० ४ क० पु० प्रणिधानाद्विशिष्यते इति पाठः।

पं० ६ क० पु० षड्विंशकं महादेवीति पाठः।

पं० १९ ख० पु० आत्मताभिमानादिति पाठः।

ननु स्वदर्शनौचित्येन एवं बन्धविगलनेऽपि किमिति नासौ मुक्तः इत्याशंक्याह

though free from one bondage

तस्मान्मुक्तोऽप्यवच्छेदादवच्छेदान्तरास्थितेः । due to presence of other bondage
अमुक्त एव, मुक्तस्तु सर्वावच्छेदवर्जितः ॥ ३४ ॥

Only he is actually free who is rid of all bondages (limitations)

'......अध्वा बन्धस्य कारणम् ।'

इत्युक्तेः अध्वा तावद्बन्धकः । तत्र बौद्धादयो बुद्धि-तत्त्वान्तबन्धविगलनात् तन्मुक्ता अपि तदूर्ध्ववर्त्य-ध्वान्तरावच्छेदास्थितेरमुक्ता एव, अत एवैषां पुनरपि सर्गारम्भे सृज्यमानत्वात् संसाराविर्भावो,-बन्धकारणस्य निःशेषेणाप्रक्षयात् । यद्वक्ष्यति

'सांख्यवेदादिसंसिद्धान् श्रीकण्ठस्तदहर्मुखे ।
सृजत्येव पुनस्तेन न सम्यङ्मुक्तिरीदृशी ॥'

इति । श्रीस्वच्छन्दशास्त्रेऽपि

---

पं० ६ ख० पु० इत्याद्युक्तेरिहाध्वा तावदिति पाठः ।

पं० ७ ख० पु० तत्त्वान्तर्बन्धविगलनात् इति पाठः । क० पु० विगलनान्मुक्ता इति पाठः ।

पं० ८ ख० पु० अवच्छेदावस्थितेरिति पाठः ।

पं० १० ख० पु० निःशेषेणाक्रमात् इति प्रथमपाठः संदृश्यते ।

पं० १२ क० पु० पुनस्तस्मादिति, ख० पु० न सङ्कमुक्तिरिति पाठः ।

'लौकिकानां पुनः सृष्टिः पुनः संहार एव च ।
संसारचक्रमारूढा भवन्ति घटयन्त्रवत् ॥'

इत्यादि सामान्येनाभिधाय

'मुक्तं च प्रतिबन्धात्तं पुनर्बध्नाति चेश्वरः ।
बन्धः संसारतो भूयो यावद्देवं न विन्दति ॥'

इति बौद्धाद्यवान्तरदर्शनमुक्तोपलक्षणपरतया विशेषेणोक्तम् । यः पुनर्निःशेषप्रक्षीणसर्वाध्वबन्धः स एव साक्षान्मुक्तः इत्याह 'मुक्तस्तु सर्वावच्छेदवर्जितः' इति । यदुक्तं

'सर्वाध्वनो विनिष्क्रान्तं शैवानां तु परं पदम् ।'

इति । तथा

'शैवः सिद्धो भाति मूर्ध्नातरेषां
मुक्तः सृष्टौ पुनरभ्येति नाधः ।'

इति ॥ ३४ ॥

अत्र चैवं-विधमेव पूर्णं ज्ञानं निमित्तम् इत्याह

यत्तु ज्ञेयसतत्त्वस्य ज्ञानं सर्वात्मनोज्झितम् ।
अवच्छेदैर्न तत्कुत्राप्यज्ञानं सत्यमुक्तिदम् ॥३५॥

---

पृ० ७०, पं० १) क० पु० पुनः संसार इति पाठः ।
पं० ५ ख० पु० यावद्देहं न विन्दति इति पाठः ।
क० पु० लक्षणतयेति पाठः ।

But that knowledge describes which (leads) the object's (characteristics) in true perspective
2) free from all limiting condit[ions]
3) under all circumsta[nces]
4) Bestows the TRUE LIBERATION from Ignorance
@ See next page

'अवच्छेदैः' संकोचाधायिभिरिदन्तापरामर्शैः [सर्वात्मना' सर्वप्रकारं वासनामात्रेणापि यत् 'उज्झितं' पराहन्तापरामर्शसारमित्यर्थः ] अत एव च पूर्णप्रथात्मकत्वात् 'न तत् कुत्राप्यज्ञानम्' अतश्च 'सत्यां' मुक्त्याभासविलक्षणां 'मुक्तिं' ददाति, अहंपरामर्शसारप्रमात्रैकात्म्येन स्फुरति इत्यर्थः ॥ ३५ ॥ @

इदानीमुद्दिष्टयोर्ज्ञानाज्ञानयोरेव स्वरूपं विभजति

ज्ञानाज्ञानस्वरूपं यदुक्तं प्रत्येकमप्यदः ।
द्विधा पौरुषबौद्धत्वाभिदोक्तं शिवशासने ॥३६॥ As expounded in Śaiva Darshan

'शिवशासने' इति पञ्चस्रोतोरूपे पारमेश्वरदर्शने इत्यर्थः । एतद्धि सर्वत्रैवाविशेषेणोक्तम् ॥ ३६ ॥

तदेव लक्षयति

of the two तत्र पुंसो यदज्ञानं (ignorance) मलाख्यं तज्जमप्यथ (innate) ।
स्वपूर्णचित्क्रियारूपशिवतावरणात्मकम् ॥३७॥ of the form of veil
संकोचिदृक्क्रियारूपं तत्पशोरविकल्पितम् ।

---

पं० ११ क० पु० सर्वत्राविशेषेणेति पाठः ।

पं० १४ क० पु० सुपूर्णेति पाठः ।

पं० १५ क० ख० पु० संकोचदृगिति पाठः । क० पु० पशोरविकल्पकमिति-पाठः ।

† of His own omniscience and Omnipotence

o uncaused by his determinate consciousness of mind—featuring Pashu-Bhava

xx characterized by limited Chit & Kriya Shaktis

अथ-शब्द आनन्तर्ये, उद्देशानन्तरं हि लक्षणपरीक्षयोरवसरः इत्याशयः। 'तत्र' द्विविधयोर्ज्ञानाज्ञानयोर्मध्यात्

'.........पुंसः प्रादुर्भवत्परम् ।'

इत्यस्यात्मनोऽपि यत्समनन्तरोक्तस्वरूपं मलाख्यमनन्यसाधारणानवच्छिन्नज्ञानक्रियायोगि परप्रमातृरूपाच्छिवादेव जातमुद्भूतमित्यर्थः। परमेश्वर एव हि स्वस्वातन्त्र्यात्पूर्णज्ञत्वकर्तृत्वाद्यपहस्तनेन अख्यात्यात्मकाणवमलाविर्भावेन स्वात्मानमावृणुयात्। तदुक्तं

'परमं यत्स्वातन्त्र्यं
दुर्घटसंपादनं महेशस्य ।
देवी मायाशक्तिः
स्वात्मावरणं शिवस्यैतत् ॥ (प० सा० १५ का० )
मायापरिग्रहवशाद्-
बोधो मलिनः पुमान्पशुर्भवति ।' (प० सा० १६ का० )

इति। वक्ष्यति च

७ नाममात्रेण वस्तुसंकीर्तनमुद्देशः, सजातीयविजातीयासाधारणनिरूपकं कारणं लक्षणम्, युक्त्ययुक्तिविवेकः परीक्षा इति ।

'तेन स्वरूपस्वातन्त्र्यमात्रं मलविजृम्भितम् ।'

इति। तदेव पशोराणवादिमलत्रययोगिनोऽपि तस्य मातुर्देशकालाद्यवच्छिन्नत्वान्नियतद्वक्क्रियास्वाभासालोचनात्मकं ज्ञानम् । परमेश्वर एव हि सर्वज्ञताद्यपहस्तनेन अणुतां प्रापितस्य स्वात्मनः पुनरपि कलादियोगं कृतवान्, येनास्य नियतं ज्ञत्व-कर्तृत्वाद्यभियुक्तं । तदुक्तं

'असूत सा कलातत्त्वं यद्योगादभवत्पुमान् ।
जातकर्तृत्वसामर्थ्यो विद्यारागौ ततोऽसृजत् ॥
विद्या विवेचयत्यस्य कर्म तत्कार्यकारणे ।
रागोऽपि रञ्जयत्येनं स्वभोगेष्वशुचिष्वपि ॥
नियतिर्योजयत्येनं स्वके कर्मणि पुद्गलम् ।
कालोऽपि कलयत्येनं तुट्यादिभिरवस्थितः ॥'

इति। ज्ञानस्वरूपस्य प्रथममुद्देशेऽपि अवश्योच्छेद्यत्वप्रतिपादनार्थमादावज्ञानस्वरूपं निरूपितम् ॥

ननु पुंसो बुद्धिवृत्त्यात्मकं ज्ञानं निर्विकल्पकम्

---

पं० ८ क० पु० अभवत्पुन इति पाठः ।
पं० ६ ख० पु० ज्ञातकर्तृत्वेति पाठः ।
पं० १० ख० पु० विवेदयत्यस्येति पाठः ।
पं० १४ क० पु० अवच्छेद्यत्वेति पाठः ।

इत्युच्यते, तत् कथमेतत् बुद्ध्यंशोपनिपाति न स्यात् इत्याशंक्याह

तदज्ञानं न बुद्ध्यंशोऽध्यवसायाद्यभावतः ३८॥

एवमपि हि बुद्धेः

'अध्यवसायो बुद्धिः'

इत्याद्युक्तेरध्यवसाय एव मुख्यं रूपं, कथमस्य एतदभावे तद्धर्मत्वं स्यात् ॥ ३८ ॥

अत एवाह

अहमित्थमिदं वेद्मीत्येवमध्यवसायिनी ।
षट्कञ्चुकाबिलाणुस्थप्रतिबिम्बनतो यदा ॥३९॥
धीर्जायते, तदा तादृग्ज्ञानमज्ञानशब्दितम् ।
बौद्धं तस्य च तत्पौंस्नं पोषणीयं च पोष्टृ च ४०॥

अस्याश्चैवमध्यवसाययोगित्वे हेतुः 'षट्कञ्चुक' इति । षट्कञ्चुकैः

'कालकलानियतिबलाद्रागाविद्यावशेन संबद्धः ।

---

पं० ३ ख० पु० बुद्ध्यंशो व्यवसायेति पाठः ।
पं० ११ ख० पु० धीर्जायेतेति पाठः ।
पं० १५ क० पु० सम्बन्ध इति पाठः ।

अधुनैव किंचिदेवेदमेव सर्वात्मनैव जानामि ।
मायासहितं कञ्चुकषट्कमणोरन्तरङ्गमिदमुक्तम् ॥'

(प० सा० १६ उ० १७)

Empirical Being

इत्यादिना निरूपितस्वरूपैः 'आबिलः' प्रतिनियतज्ञत्वकर्तृत्वाद्युत्पत्त्या म्लानप्रायो योऽसौ 'अणुः' परिमितात्मा, ततो जातात् 'प्रतिबिम्बनात्' चिच्छायासंक्रमणात् इत्यर्थः। एवं ह्यस्याः पुंबोधव्यक्तिभूमित्वादेवंस्वभावो भवेत् इति भावः। 'तादृक्' इति एवमध्यवसायरूपम्। अनयोश्च परस्परं कार्यकारणभावं दर्शयितुमाह 'तस्य' इत्यादि, 'तस्य' इति बौद्धस्य, 'पौस्नं' पुंसि भवं पौरुषम् इत्यर्थः। 'पोषणीयं' कार्यम् इत्यर्थः। कामशोकाद्यावेशभाजो हि तन्मयतानुसंधानादिना तत्तदर्थसाक्षात्कारात्मकमविकल्पकं ज्ञानमुदियात्। यदाहुः

Limited Self

'कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः ।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ॥'

इति। 'पोष्टृ' इति कारणम्। स्वप्नादावपि अनुभव

---

पं० १६ क० पु० पुरतोऽवस्थितानि वेति पाठः ।

एव हि प्राच्यो निमित्तं, नहि नारिकेलद्वीपवासिनो वह्निविकल्पादाविच्छापि भवेत् ॥ ३९ ॥ ४० ॥

एवमज्ञानं निरूप्य, ज्ञानमपि द्विविधं निरूपयितुमाह

क्षीणे तु पशुसंस्कारे पुंसः प्राप्तपरास्थितेः ।
विकस्वरं तद्विज्ञानं पौरुषं निर्विकल्पकम् ॥४१॥
विकस्वराविकल्पात्मज्ञानौचित्येन यावसा ।
तद्बौद्धं यस्य तत्पौंस्नं प्राग्वत्पोष्यं च पोष्टृ च
॥ ४२ ॥

पशोराणवस्यापि वासनामात्रक्षयाभिधानात् 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति न्यायेन कार्ममायीययोरपि प्रक्षयान्निवृत्तनिखिलबन्धस्य 'पुंसः' अत एव प्राप्तपरमचिदैकात्म्यस्य 'विकस्वरं' पराहन्ताविमर्शात्मकं 'निर्विकल्पकं' कृत्रिमाहंकारादिविकल्प-

---

पं० ४ ख० पु० प्राप्तपुरस्थितिरिति पाठः ।
पं० १० क० पु० पशोरावरणस्यापि इति पाठः ।
पं० १३ ख० पु० प्राप्तपरसंविदैकात्म्यस्य इति पाठः ।

1, extinction of all three Malas, Anava and the other two ensuing therefrom
2, state of ultimate Reality
3, Expansion of oneness with Chit Shakti takes place
4, Highest I-consciousness manifests
5, The right Knowledge of All Pervasive nature of SELF arises
6, The principle of 'One inducing the growth of the other' (sets in motion) as it holds true of the two types of Ignorance viz. Paursha and Baudha Ajnana described earlier.

विलक्षणं ज्ञानं पौरुषं भवति इति वाक्यार्थः । 'औचित्येन' इति तद्वत्पूर्णेनात्मना इत्यर्थः । अतश्च 'सर्वो ममायं विभवः' इत्येवंरूपत्वमस्याः । 'यस्य' इति बौद्धज्ञानस्य । 'प्राग्वत्' इति यथैवाज्ञानयोः परस्परं पोष्यपोषकभावस्तथैव इत्यर्थः । तथैव पूर्णापूर्णत्वेन पुनः विशेषो ग्राह्यः, अन्यथा हि ज्ञानाज्ञानयोः स्वरूपमेवाभिहितं न स्यात् ॥ ४१ ॥ ४२ ॥

नन्वेवंविधमज्ञानं तावदनाद्येवावस्थितम् इति नास्ति विवादः, एतदभावात्मकं ज्ञानं पुनः कदा समुदियात्, एतदभावे च किं निमित्तम् ? इत्याशङ्क्याह

तत्र दीक्षादिना पौंस्नमज्ञानं ध्वंसि यद्यपि ।
तथापि तच्छरीरान्ते तज्ज्ञानं व्यज्यते स्फुटम् ॥ ४३ ॥

यद्यप्युक्तस्वरूपं 'पौंस्नमज्ञानं'

---

पं० ३ क० पु० सर्वोऽयं मम विभव इत्येवंरूपः पाठः ।

पं० १३ क० पु० तथापि तु शरीरान्ते इति पाठः ।

@ until the ignorance (innate) obtains, the state of bondage does not operate & vice versa — this remains undisputed.

'दीयते ज्ञानसद्भावः क्षीयन्ते पशुवासनाः ।
दानक्षपणसंयुक्ता दीक्षा तेनेह कीर्तिता ॥'

इत्याद्युक्तस्वरूपया दीक्षया नश्यत्येव 'तथापि' 'तत्' अज्ञानाभावमात्ररूपमात्मज्ञानं व्यक्त्युन्मुखमपि

'..............प्रारब्धेकं न शोधयेत् ।'

इत्याद्युक्तेरिदंशरीरारम्भकस्य कार्ममलस्य सद्भावात् 'तस्य' वर्तमानशरीरस्य 'अन्ते स्फुटं व्यज्यते'

'..................देहपाते शिवं व्रजेत् ।'

इत्याद्युक्त्या साक्षात्कारात्म स्फुरति इत्यर्थः । आदिशब्दाच्च शेषवृत्त्या ग्रहणं, न तु तीव्रतरशक्तिपातादेः, तद्धि दीक्षायां निमित्तम् इति तद्वचनेनैवास्य ग्रहः सिद्धः, न चास्मिन्दीक्षातोऽन्यत्किंचिन्मुक्तौ निमित्तम् । तदुक्तं

'तस्मात्प्रविततादृबन्धात्परस्थानविरोधकात् ।
दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि ॥'

---

पं० ५ क० पु० प्रारब्धं केन शोधयेदिति पाठः ।
पं० १० ख० पु० तीव्रतमशक्तिपातादेव इति पाठः ।
पं० ११ ख० ग० पु० तद्वदनेनैवास्य ग्रह इति, न चान्यस्मिन्दीक्षेति च पाठः ।

इति । तीव्रतमशक्तिपातादौ पुनरनुपायादिक्रमेण दीक्षा भवेत्, येनास्य तत्कालमेवापवर्गः । तदुक्तं

'तत्संबन्धात्ततः कश्चित्तत्क्षणादपवृज्यते ।'

इति दीक्षानिरपेक्षमेव पुनरेतत् मुक्तौ निमित्तम् इति न संभाव्यम्, एवं श्रुतिविरोधः स्यात् ।

'तस्य दीक्षां विनैवात्मसंस्कारपरिणामतः ।
सम्यग्ज्ञानं भवेत्सर्वशास्त्रेषु परिनिष्ठितम् ॥'

इत्यादौ पुनर्बाह्यक्रियादीक्षाभिप्रायेण तन्निषेधो विवक्षितः, अन्यथा ह्यत्रात्मसंस्कारशब्दार्थ एव कथं संगच्छताम् इत्यलं बहुना ॥ ४३ ॥

ननु यद्येवं दीक्षया देहान्त एव मुक्तिर्भवेत्, तत्कथं 'जीवन्नेव विमुक्तोऽसौ' इत्याद्युक्तम् इत्याशङ्क्याह

बौद्धज्ञानेन तु यदा
बौद्धमज्ञानजृम्भितम् ।
विलीयते तदा जीवन्-
मुक्तिः करतले स्थिता ॥ ४४ ॥

---

पं० ३ क० पु० तत्क्षणादपव्यज्यत इति पाठः ।

पं० ६ ख० पु० संस्कारपरिपाकत इति पाठः ।

पं० ८ क० पु० पुनर्वाक्यक्रियेति ख० पु० पुनर्वाक्ये क्रिया इत्यादिरूपः पाठः ।

'बौद्धज्ञानेन' इति परमेश्वराद्वयशास्त्रश्रवणाद्युद्भूतेन । तदुक्तं

'गुरुणैव यदा काले संप्रदायो निरूपितः ।
तदाप्रभृति मुक्तोऽसौ यन्त्रं तिष्ठति केवलम् ॥'

इति । एतच्च दीक्षिताधिकारेणैव ज्ञेयम्, नहि अकृतदीक्षस्य शास्त्रश्रवणेऽप्यधिकारः इति कुतस्तदवबोधनिमित्तकोऽपि तज्ज्ञानाविर्भावः स्यात् । तदुक्तं

'अदीक्षितानां पुरतो नोच्चरेच्छिवपद्धतिम् ।'

इति । न च अप्रध्वस्तपौरुषाज्ञानस्य अनेन किंचिद्भवति इत्युक्तप्रायम्, अन्यथा हि प्रेक्षावतां दीक्षायां प्रवृत्तिरेव न स्यात्—साध्यस्यार्थस्य अत एव स्रष्टुरभावात्, अत एव दीक्षायां शिथिलास्थत्वं न वाच्यं, तस्या एव मुक्तिं प्रति मूलकारणत्वात् । एवं दीक्षादिना पौंस्नं ज्ञानमभिव्यक्त्युन्मुखमपि न तदैव मुक्तिप्रदं—देहान्ते तदभिव्यक्तेरुक्तत्वात्, इदं पुनस्तदैव इति ततोऽस्य प्राधान्यमपि कटाक्षितम् ॥ ४४ ॥

---

पं० ४ क० पु० दीक्षाधिकारेणैवेति पाठः ।

न केवलमेतदेवास्य ततः प्राधान्यनिमित्तं यावदन्यदपि इत्याह

दीक्षापि बौद्धविज्ञान-
पूर्वा सत्यं विमोचिका ।
तेन तत्रापि बौद्धस्य
ज्ञानस्यास्ति प्रधानता ॥४५॥

इह

'सर्वलक्षणहीनोऽपि ज्ञानवान्गुरुरुत्तमः ।'

इत्याद्युक्तेरधिगतशास्त्रार्थस्यैव हि गुरोर्दीक्षायाम् अधिकारः, अत एव तस्य

'शिवशास्त्रविधानज्ञं ज्ञानज्ञेयविशारदम् ।'

इति लक्षणं प्राधान्येनोक्तं, अन्यथा पुनः

'शास्त्रहीने न सिद्धिः स्याद्दीक्षायां वीरवन्दिते ।'

इत्याद्युक्त्या दीक्षा विमोचिकैव न स्यात्, तेन इति दीक्षायां बौद्धस्य ज्ञानस्य कारणत्वात्, नहि तेन विना तस्या निष्पत्तिरेव स्यात् ॥ ४५ ॥

न चैतदस्मदुपज्ञमेव इत्याह

---

पं० ३ ग० पु० दीक्षापि चात्र विज्ञानपूर्वा सद्योविमोचिकेति पाठः ।
पं० ६ क० पु० शास्त्रस्यैव गुरोरिति, दीक्षायामेवेति एव शब्दाधिकश्च पाठः ।

ज्ञानाज्ञानगतं चैतद्-
द्वित्वं स्वायम्भुवे रुरौ ।
मतङ्गादौ कृतं श्रीमत्-
खेटपालादिदैशिकैः ॥४६॥

तदुक्तं श्रीस्वायम्भुवे

'अथात्ममलमायाख्यकर्मबन्धविमुक्तये ।
व्यक्तये च शिवत्वस्य शिवज्ञानं प्रवर्तते ॥'

इति ।

'अथानादिर्मलः पुंसां पशुत्वं परिकीर्तितम् ।
तत्सद्भाववशोऽज्ञादिः पाशौघः पौरुषः स्मृतः ॥
तस्मात्तत्त्वतो ज्ञेयं मोक्षमक्षयमिच्छता ।'

इति च । श्रीरुरावपि

'यजन्ति विविधैर्यज्ञैर्मन्त्रतत्त्वविशारदाः ।
गुरुतन्त्राद्यनुज्ञातदीक्षासिच्छिन्नसंशयाः ॥'

इति ।

'न मीमांस्या विचार्या वा मन्त्राः स्वल्पधिया नरैः ।
प्रमाणमागमं कृत्वा श्रद्धातव्या विचक्षणैः ॥

---

पं० १ क० पु० ज्ञानाज्ञानकृतमिति पाठः ।

पं० १३ ख० पु० जयन्तीति पूर्वतनः पाठश्च दृश्यते, क० पु० मन्त्रतन्त्रविशारदा इति च पाठः ।

पं० १४ क० पु० दीक्षाविच्छिन्नसंशया इति पाठः ।

पं० १६ क० पु० न मीमांसा विचार्या वा मन्त्रस्वल्पधियेति पाठः ।

सर्वे मन्त्रात्मका देवाः सर्वे मन्त्राः शिवात्मकाः ।
शिवात्मकमिदं ज्ञात्वा शिवमेवानुचिन्तयेत् ॥'

इति च । श्रीमतङ्गेऽपि

'ततः स भगवानीशः स्फुरन्माणिक्यशेखरः ।
वाक्यानलसमुत्थेन ज्वालावीर्येण मन्त्रराट् ॥
प्रददाह मुनेः सर्वमज्ञानं तृणराशिवत् ।'

इति ।

'शिववक्त्राम्बुजोद्भूतममलं सर्वतोमुखम् ॥
शिवत्वोन्मीलनं तथ्यं ज्ञानमज्ञाननाशनम् ।
अनेन सिद्धाः पश्यन्ति यत्तत्पदमनामयम् ॥'

इति च । आदिशब्देन चिह्लाचक्रेश्वरीमतादेर्ग्रहणम् । तदुक्तं तत्र

'बौद्धं च पौरुषेयं च द्विविधं तन्मलं स्मृतम् ।
तत्र दीक्षादिना याति पौरुषेयं मलं क्षयम् ॥
बौद्धमक्षयमेवास्ते तावत्तावत्समुद्रितम् ।
यावन्न बौद्धमेवास्य सजातीयविलापकम् ॥

---

पं० १ ख० पु० सर्वे वर्णात्मका मन्त्राः सर्वे वर्णाः शिवात्मका इति शोधितः पाठोऽस्ति ।

पं० २ क० पु० शिवात्मकमिदं कृत्वेति पाठः ।

पं० १५ ख० पु० बौद्धमक्षतमिति पाठः ।

ज्ञानमभ्युदितं सम्यक्सारेतरविभागकृत् ।'

इति । पौंस्नज्ञानाभिव्यञ्जने दीक्षा तावन्न प्रभवेद्यावदस्य बौद्धं ज्ञानं पूर्वभावि न स्यात्, येनास्य ततोऽपि प्राधान्यमुक्तम् ॥ ४६ ॥

एवं बौद्धमपि ज्ञानं पारमेश्वरं शास्त्रमन्तरेण कुतः समुदियात् इति तदेव मूलकारणत्वादिह प्रधानम् इत्याह

तथाविधावसायात्म-
बौद्धविज्ञानसम्पदे ।
शास्त्रमेव प्रधानं य-
ज्ज्ञेयतत्त्वप्रदर्शकम् ॥ ४७ ॥

'संपदे' इति तां जनयितुम् इत्यर्थः । यतो 'ज्ञेयस्य' नीलसुखादेः 'तत्त्वं' प्रकाशमानत्वान्यथानुपपत्त्या प्रकाशात्मकशिवस्वभावत्वं, तस्य प्रदर्शकम् परार्द्वयोपदेशकारित्वात्तदभिधायकम् इत्यर्थः । अत एव चास्य तदप्रदर्शकतया शास्त्रान्तरेभ्यो वैलक्षण्यमपि कटाक्षितम् ॥ ४७ ॥

---

पं० ३ ख० पु० बौद्धमपि ज्ञानमिति पाठः ।

पं० ११ ग० पु० प्रधानं यज्ज्ञेयतत्त्वप्रकाशकमिति पाठः ।

ननु भवत्वेवम्, अत्र पुनः किं निमित्तं यत्पौंस्नाज्ञाननिवृत्तौ देहान्ते मुक्तिः, बौद्धाज्ञाननिवृत्तौ तु तदैव इत्याशङ्क्याह

दीक्षया गलितेऽप्यन्त-
रज्ञाने पौरुषात्मनि।
धीगतस्यानिवृत्तत्वा-
द्विकल्पोऽपि हि संभवेत् ॥ ४८ ॥

'धीगतस्य' इति अज्ञानस्य। 'विकल्पो हि' भेदप्रथात्मकः स चैव अख्यातिरूपत्वादज्ञानम् इति बहूक्तम् ॥ ४८ ॥

ननु धीगतमज्ञानं यदि न निवृत्तं तदात्मनः किमायातम् इत्याशङ्क्याह,

देहसद्भावपर्यन्त-
मात्मभावो यतो धियि।
देहान्तेऽपि न मोक्षः स्या-
त्पौरुषाज्ञानहानितः ॥ ४९ ॥

---

पं० २ क० पु० देहान्ते निवृत्तिरिति पाठः।
पं० ६ क० पु० निवृत्तित्वादिति पाठः।
पं० ६ क० ख० पु० सा चैवेति पाठः।
पं० १३ क० पु० देवसद्भावेति पाठः।

1) after expiry of the span of life
3) presence of egotism
4) in regard to Buddi
5) Moksha does not obtain at death
6) even when innate ignorance has been destroyed.

दीक्षितस्यापि हि नियतकालं बुद्धावात्मग्रहो भवेत् इति तयोरभेदाद् बौद्धमप्यज्ञानमात्मन्युपचितं संभवेत् इति भावः । अत एव देहान्ते बुद्धावात्मग्रहव्युपरमात् पौरुषस्याज्ञानस्य दीक्षादिना पूर्वमेव प्रध्वस्तत्वान्मोक्षः इति युक्तमुक्तं 'तच्छरीरान्ते तज्ज्ञानं व्यज्यते स्फुटम्' इति ॥ ४९ ॥

एवं विकल्पोऽत्र संभवन्मुक्तौ व्यवधायकः इति न तदैव मुक्तिः, तस्य पुनरसंभवे सत्यपि देहे मुक्तिः इत्याह

बौद्धाज्ञाननिवृत्तौ तु विकल्पोन्मूलनाद्ध्रुवम् ।
तदैव मोक्ष इत्युक्तं धात्रा श्रीमन्निशाटने ॥५०॥

न चैतदप्रमाणकम् इत्याह 'इत्युक्तम्' इत्यादि ॥५०॥

विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत् ।
इतरस्तु तदैवेति शास्त्रस्यात्र प्रधानतः ॥५१॥

१ क० पु० ततः शरीरान्ते इति पाठः ।

'इतर' इति निर्विकल्पः । 'तदैव' इति देहसद्भावे इत्यर्थः । यदुक्तं तत्रैव

'विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत् ।'
विकल्पहीनचित्तस्तु ह्यात्मानं शिवमव्ययम् ॥
पश्यते भावशुद्ध्या यो जीवन्मुक्तो न संशयः ।'

इति । इदानीं प्राक्प्रतिज्ञातं शास्त्रस्यैव प्राधान्यं निगमयति—इति इत्यादिना, 'इतिशब्दः' काकाक्षिन्यायेन योज्यः, तेन श्रीनिशाटनग्रन्थसमाप्तौ हेतौ च व्याख्येयः । स च 'ज्ञेयतत्त्वप्रदर्शकम्' इत्यादिना प्रागप्युक्तः ॥ ५१ ॥

Shaloka #47 — 25.7.96 (Pm)

ननु किं नाम ज्ञेयस्य तत्त्वं यत्प्रदर्श्यमानं शास्त्रप्राधान्यावगमकमपि स्यात् इत्याशङ्क्याह

ज्ञेयस्य हि परं तत्त्वं यः प्रकाशात्मकः शिवः ।
नह्यप्रकाशरूपस्य प्राकाश्यं वस्तुतापि वा ॥५२॥

1) The ultimate essence 2) of object of knowledge is indeed 3) Siva of the evershining nature 4) What is not self-shining 5) can not be made to shine 6) nor can it really be so (that is existent)

पं० १ ख० पु० देवसद्भावे इति पाठः ।
पं० ३ ख० पु० विकल्पक्षीणचित्तस्तु इति पाठः ।
पं० ९ क० पु० ज्ञेयतत्त्वप्रकाशकमिति पाठः ।

@ all would have been Omniscient
° everything would always be manifest (Known) to everyone around, it would not be individualized and as such @ which is not true.



(of the object of knowledge) (power of revelation) (is not independent) († Because of that)

'ज्ञेयस्य' नीलादेर्नीलतैव प्रकाशमानता न तावदात्मभूता, तथात्वे हि सर्वदैव सर्वान्प्रति च स्यान्न तु कदाचित्कंचित्प्रति इति सर्वेऽपि सर्वज्ञाः स्युः । अतश्च अस्य प्रकाशते, मम प्रकाशते इति प्रकाशात्मप्रमातृसंलग्नैव सा युज्यते इति नासौ स्वातन्त्र्येण पर्यवसितस्वरूपो नीलादिः, शिव एव प्रकाशात्मकः प्रमाता, तदतिरिक्तस्य अन्यस्य भेदाभेदविकल्पोपहतत्वात्, अतश्च नीलादेर्ज्ञेयस्य प्रकाशमानत्वात् स एव परमार्थः इत्युक्तं 'प्रकाशात्मकः शिवः परं तत्त्वम्' इति । नन्वसौ स्वयमतथारूपोऽपि प्रकाशसंबन्धात्तथा भविष्यति इत्याशङ्क्याह 'नहि' इत्यादि । प्रकाशसंबन्धेनापि हि प्रकाशमानो नीलादिः स्वयं प्रकाशरूप एव सन् प्रकाशते, नहि अप्रकाशरूपश्च प्रकाशते च इति स्यात्, नहि अश्वेतः प्रासादः श्वेतते, न चैवं वस्तुत्वमप्यस्य स्यात्, नहि प्रकाशरूपतामपहाय अन्यद्वस्तु संभवेत् इति भावः ॥ ५२ ॥

---

पं० १ क० पु० नीलसुखादेरिति पाठः ।

पं० ५ क० पु० पर्यवस्थितरूपेति पाठः ।

पं० १२ क० पु० प्रकाशनरूपः प्रकाशते इति पाठः ।

Therefore "this shines (i.e. it is there), I see it", all that obtains because the revelation of objects of knowledge depends on its cognition by the self-shining Knower - Subject (Pramata); the blueness of the blue object is not independent but depends on being so cognized by the Knower.

एवं च न केवलं नीलादेर्ज्ञेयस्य भावस्य प्रकाशमानत्वात्प्रकाशात्मकः शिवस्तत्त्वं यावत्तदभावस्यापि इत्याह

अवस्तुतापि भावानां
चमत्कारैकगोचरा ।
यत्कुड्यसदृशी नेयं
धीरवस्त्वेतादित्यपि ॥ ५३ ॥

यतो 'नास्त्यत्र घट' इत्येवंरूपापि बुद्धिर्बोधस्वभावत्वात्कुड्यादिजडपदार्थविलक्षणा अत एव घटाद्यभावोऽपि बुद्ध्यमानत्वात्परमानन्दैकघनबोधात्मकशिवस्वभाव एव इत्यर्थः । तदाहुः

'अबोधोऽपि बुद्ध्यमानो बोधात्मभूत ईश्वर एव ।'

इति ॥ ५३ ॥

ननु सिद्धे प्रकाशे भावाभावरूपस्य ज्ञेयस्य तदेकपरमार्थत्वं सिद्ध्येत्, स एव पुनः केन प्रमाणेन सिद्धः इत्याशङ्क्याह

पं० १ क० पु० घटाभावोपीति पाठः ।

प्रकाशो नाम, यश्चायं
सर्वत्रैव प्रकाशते ।
अनपह्नवनीयत्वात्
किं तस्मिन्मानकल्पनैः ॥५४॥

अपूर्वार्थविषयं खलु प्रमाणं । यदाहुः

'अनधिगतविषयं प्रमाणमज्ञातार्थप्रकाशो वा'

इति । प्रकाशस्य अपूर्वत्वेन प्रकाशो नास्ति सर्वदैव तस्य प्रकाशमानत्वेन 'अनपह्नवनीयत्वात्' इति व्यर्थं तत्र प्रमाणपरिकल्पनम् । तथाहि तदा तस्य अपूर्वत्वेन प्रकाशः स्यात्, यद्यसौ पूर्वमनधिगतत्वेन अप्रकाशमानः स्यात्, तथाभावश्च तद्रहितपूर्वकालस्मृतौ सत्यां भवेत्, स्मृतिरपि एवंरूपमनुभवं विना नोत्पद्यते, अनुभूतविषयासंप्रमोषात्मकत्वात्तस्याः, न च प्रकाशरहितत्वेन पूर्वकालमनुभवोऽस्ति, तस्यैवानुभवस्य प्रकाशात्मकत्वात्, स एव हि प्रकाशः इति

पं० ११ क० पु० तदभावश्चेति पाठः ।
पं० १२ क० पु० एवंरूपानुभवमिति समस्तः पाठः ।
पं० १५ ख० पु० य एव हि प्रकाश इति पाठः ।

कथं पूर्वमपि तदभावः, अतश्च सर्वदास्य अवभासमानत्वेन आदिसिद्धत्वात् न प्रमाणसव्यपेक्षा सिद्धिः। स एव च 'प्रकाश एव प्रकाशकः प्रमाता' इति नीत्या परप्रमातृरूपः परमेश्वरः शिवः इति युक्तमुक्तम् 'ज्ञेयस्य च परं तत्त्वं यः प्रकाशात्मकः शिवः।' इति ॥ ५४ ॥

26.7.96 (PM)

न केवलमेतत्सिद्धौ प्रमाणानामनुपयोगो यावत्प्रत्युत एषां तदधीना सिद्धिः इत्याह

1) The means of right Knowledge　　2) On which the existence of things depends

प्रमाणान्यपि वस्तूनां
जीवितं यानि तन्वते ।
तेषामपि परो जीवः
स एव परमेश्वरः ॥ ५५ ॥

3 Besides them 4 (there exists) another giver of life　　6) That is the highest Lord †

इह वस्तूनां नीलपीतादीनां प्रकाशनिरपेक्षेण स्वस्वरूपेण तावत्स्वयमन्योन्यं वा न कश्चिद्विशेषः । नहि स्वात्मनि नीलं नीलं पीतं वा पीतम् । यदि-

---

पं० १ ख० पु० सर्वमस्यावभासेति पाठः ।

पं० १४ ख० पु० नास्ति कश्चिद्विशेष इति पाठः ।

पं० १५ क० पु० यदि हि स्वात्मनि पीतं स्यात्पीतं नीलं वा नीलं तत्किमिव विरुद्धमिति पाठः ।

† to whom they owe their existence for the phenomenal world is His creation.

नाम हि स्वात्मनि नीलं पीतं स्यात्पीतं वा नीलं, तत्किमिव न विरुद्धमापतेत् । अथ यथैव यत्प्रकाशते तथैव तत्स्वात्मनि परिनिष्ठितं स्यात् इति न नीलं पीतं, पीतं वा नीलम्, इति चेत्—एवं तर्ह्येषां स्वात्मनि विशेषो न कश्चिदुक्तः स्यात्, अपि तु प्रकाशते इति—इति प्रकाश एवैषां रूपं तत्तन्नियतस्वरूपप्रतिष्ठानिबन्धनत्वात् जीवितं वितनुयात् येन नीलमिदं पीतमिदम् इति सिद्ध्येत् । स च नीलाद्युपरागेण नियतरूपतामवलम्बमानः प्रमाणशब्दव्यपदेश्यो भवेत् । न चास्य स्वात्मसिद्धिं प्रति अन्यदपेक्षणीयं—प्रकाशरूपत्वात्, प्रकाशस्य च स्वपरप्रकाशकत्वात्, तथा-भूतोऽप्यसौ प्रकाशो विमर्शरूपतां विना नार्थस्य आत्मनो वा प्रकाशरूपतायां प्रतिष्ठास्पदं स्यात्, नहि प्रकाशः इत्येवासौ स्वपरात्मनोः प्रतिष्ठापको भवेत्, एवं हि नीलमपि न नीलम् इत्येव कृत्वा तथा स्यात् । तस्मात्स्वपरप्रकाशता-

---

पं० ४ क० पु० स्वात्मनि न कश्चिदर्थ इति पाठः ।

पं० ५ ख० पु० अपि तु प्रकाश इति पाठः ।

पं० १६ ख० पु० स्वप्रकाशात्मतासिद्धाविति पाठः ।

सिद्धौ तस्यापि अहंपरामर्शात्मा जीवितभूतः प्रकाशोऽभ्युपगमनीयो – येन सर्वं सिद्ध्येत् । यदुक्तं

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ।'

इति । स एव च परप्रकाशात्मा परमेश्वरः शिवः इत्युक्तं 'तेषामपि परो जीवः स एव परमेश्वरः' इति ॥५५॥

एवमादिसिद्धत्वादस्य न केवलं साधकं प्रमाणमकिंचित्करं, यावद्बाधकमपि इत्याह

सर्वापह्नवहेवाक-
धर्माप्येवं हि वर्तते ।
ज्ञानमात्मार्थमित्येत-
न्नेति मां प्रति भासते ॥५६॥

'सर्वेषां' ज्ञातृज्ञानज्ञेयानाम् 'अपह्नवो' निराकरणं तत्र 'हेवाक' एव 'धर्मः' स्वभावो यस्यासौ बौद्धः । तत्र त्रयाभाववादिनो माध्यमिकाः । ज्ञातृज्ञेयाभाववादिनो योगाचाराः । ज्ञात्रभाववादिनो वैभाषिकाः । सोऽपि 'ह्येवं ज्ञानमात्मार्थम्' इत्येतत् मां संवेदन-

+ comprising the 3 aspects viz. Knower, Known and the Knowledge

स्वभावत्वाद् विचारयितारं प्रति नेति भासते—नास्ति इति प्रतीतिरूपो वर्तते अवतिष्ठते इत्यर्थः, तेन आत्मादेर्निराकरणे साधने वापि अवश्यमेव साधयिता पूर्वकोटावाच्छितः सिद्धः । नहि साधयितारमन्तरेण अर्थानां साध्यतैव स्यात्, स च स्वतः सिद्धः प्रकाशात्मा परमार्थरूपः परमेश्वरः शिव एव ॥५६॥

अतश्च तत्र व्यर्थमेव बौद्धस्यापि प्रमाणस्य परिकल्पनम् इत्याह

अपह्नुतौ साधने वा वस्तूनामाद्यमीदृशम् ।
यत्तत्र के प्रमाणानामुपपत्त्युपयोगिते ॥ ५७॥

1, For disproving; 2, or for affirming; 3, initial existence; 4, of phenomenal external objects †; 5; 6, what relevance; 7, do the means of knowledge; 8, claim * or possess or prove suitable

'वस्तूनां' ज्ञातृज्ञानज्ञेयात्मनाम् 'आद्यम्' आद्यसिद्धत्वात् 'ईदृशं' परप्रमातृरूपं 'तत्र' इति आदिसिद्धे प्रमातरि । प्रमेयं खलु प्रमिणवत्प्रमाणमुच्यते, प्रमेयं च विभिन्नप्रकाशाधीनसिद्धिकमिदन्ताविमृश्यं,

? omitted in scope

पं० १ ख० पु० नास्तीति प्रत्येति रूपेति पाठः ।
पं० ६ क० पु० परमार्थरूप इति वाक्यं नास्ति ।
पं० ७ क० पु० व्यक्तमेवेति, प्रमाणस्यापरिकल्पनमिति च पाठः ।

* because each such Pramana owes its credibility to the subjective consciousness of the emperical self which is Siva, the ever-shining Ultimate Reality.

च भवति । न चैवंरूपत्वं प्रमातुर्येन प्रमाणपरिच्छेद्यः स्यात्, स हि अर्थपरिच्छेदादौ प्रवृत्तः स्वप्रकाशरूपत्वान्न प्रकाशाद्भिन्नो, नापीदन्ताविमृश्यः – अहंप्रत्यवमर्शमयत्वात्, स च यदि प्रमाणप्रमेयः स्यात् तत्रापि प्रमितिक्रियायां प्रमात्रा अपरेण भाव्यं, तत्राप्यन्येन इत्यनवस्थानं स्यात्, तस्मान्नात्र प्रमाणस्य प्रवृत्तौ काचिदुपपत्तिः। यस्तु भावनोपदेशादौ 'सकृद्विभातोऽयमात्मा प्रमाता' इत्यादिरिदन्तया व्यवहारः स न वास्तवः – तत्र तस्य साक्षादप्रतीतेः, अहन्ताव्यवधानेन हि तत्रासौ प्रतीयते इत्यास्ताम्, एतद्धि पदे पदे वितनिष्यते। प्रमाणानुपयोगस्त्वादिसिद्धत्वात् समनन्तरमेव दर्शितः, इति न पुनर्वितानितः ॥ ५८ ॥

न केवलमत्र युक्तिरेवास्ति यावदागमोऽपि इत्याह

कामिके तत एवोक्तं
हेतुवादविवर्जितम् ।

---

पं० ३ ख० पु० अहंविमर्शमयत्वादिति पाठः ।

पं० ५ ख० पु० प्रमात्रन्तरेणेति पाठः ।

पं० ८ ख० पु० प्रमेत्यादिरिति पाठः ।

तस्य देवातिदेवस्य
परापेक्षा न विद्यते ॥५९॥
परस्य तदपेक्षत्वा-
त्स्वतन्त्रोऽयमतः स्थितः ।

ततः इति तत्र प्रमाणानामुपपत्त्युपयोगयोरभावात्, हेतोः अनुमानस्य वादेन विवर्जितम् । अत एवाह—तस्य इत्यादि, परस्य प्रमाणादेः, अतः इति परानपेक्षत्वलक्षणाद्धेतोः ॥५९॥

एवमस्य परानपेक्षत्वाद्यथा न प्रमाणान्यवच्छेदकानि, तथा प्रमेयाण्यपि इत्याह

अनपेक्षस्य वशिनो
देशकालाकृतिक्रमाः ॥६०॥
नियता नेति स विभु-
र्नित्यो विश्वाकृतिः शिवः ।

वशिनः स्वतन्त्रस्य इति विशेषणद्वारेण हेतुः ।

---

पं० ८ क० पु० परानपेक्षणाद्धेतोरिति पाठः ।

पं० ९ क० पु० यथा प्रमाणाद्यवच्छेदेति पाठः ।

अत्रापीति परानपेक्षस्य, प्रकाशात्मनः शिवस्य हि देशकालाकारैर्भेदाभेदविकल्पोपहतत्वादवच्छेदाधानमशक्यम् इत्युक्तं – नियता न इति । अत एव च स एवंविधः इत्याह – विभुर्नित्यो विश्वाकृतिः इति । विभुः इति देशावच्छेदशून्यत्वात् । नित्य इति अतीतादिकालावच्छेदविगलनात् । विश्वाकृतिः इति चिदचिदाद्याकारवैचित्र्योल्लासकत्वात् ॥६०॥ 6.8.96 (Pm)

एतदेव प्रपञ्चयति

विभुत्वात्सर्वगो नित्य-
भावादाद्यन्तवर्जितः ॥६१॥
विश्वाकृतित्वाच्चिदचि-
त्तद्वैचित्र्यावभासकः ॥

अत एवास्यागमेषु नानारूपत्वमुच्यते इत्याह

ततोऽस्य बहुरूपत्व-
मुक्तं दीक्षोत्तरादिके ॥६२॥

तदेवाह

---

पं० १ ख० पु० पेक्ष्यस्येति प्रकाशेति पाठः ।

पं० २ क० पु० नित्य इति कलावच्छेदेति पाठः ।

भुवनं विग्रहो ज्योतिः
खं शब्दो मन्त्र एव च ।
बिन्दुनादादिसंभिन्नः
षड्विधः शिव उच्यते ॥६३॥

भुवनं तत्तद्भुवनाधिष्ठेयं भोगाधाररूपम् । विग्रहशब्देन उपचाराद्विग्रहिणो लक्ष्यन्ते । तेषां च रुद्र-क्षेत्रज्ञादिनानारूपत्वेऽपि तत्तत्सिद्धिदानसामर्थ्यादिह रुद्रादीनि कारणान्येव । ज्योतिः बिन्दुः

'कदम्बगोलकाकारः स्फुरत्तारकसन्निभः ।'

इत्यादिनास्य ज्योतीरूपत्वेनाभिधानात् । खं शून्यं – शक्ति-व्यापिनी - समनालक्षणम् । शब्दो नादात्मा । मन्त्रः अकारोकार- मकारात्मा । अस्य विशेषणं–बिन्दुनादादिसंभिन्नः इति । यदुक्तं

'बिन्दुर्नादस्तथा व्योम मन्त्रो भुवनविग्रहौ ।
षड्वस्त्वात्मा शिवो ध्येयः फलभेदेन साधकैः ॥'

इति । तथा

---

पं० ६ ख० पु० तारकसप्रभ इति पाठः ।
पं० १४ ख० पु० भुवनविग्रहे इति पाठः ।

'उन्मना तु परो भावः स्थूलस्तस्यापरो मतः ।
पुनः शून्यं च व्योमात्मा संस्पर्शं च ततः परम् ॥
शब्दो ज्योतिस्तथा मन्त्राः कारणा भुवनानि च ।'

इति । तथा

'व्योम-विग्रह-बिन्द्वर्ण-भुवनाध्वविभेदतः ।
लक्ष्यभेदः स्मृतः षोढा··············· ॥'

इत्यादि ॥६३॥

अत्र च

'यो यत्राभिलषेद्भोगान्स तत्रैव नियोजितः ।
सिद्धिभाक्··············· ॥'

इतिन्यायेन यस्य यत्र निष्ठा तस्य तत्प्राप्तिर्भवति इत्याह

यो यदात्मकतानिष्ठ-
स्तद्भावं स प्रपद्यते ।
व्योमादिशब्दविज्ञानात्-
परो मोक्षो न संशयः ॥६४॥

यः साधको, यस्य भुवनादेः, आत्मकतायां तद्रूपतायां, निष्ठितः, स तद्भावं—तत्तद्भुवनादिरूपत्वेन नियतां सिद्धिमेति इत्यर्थः । तदुक्तं

पं० २ ख० पु० व्योमात्मा च पुनः शून्यं संस्पर्शमिति पाठः ।
पं० ५ ख० पु० भुवनेष्वनिभेदत इति पाठः ।

'भुवनं चिन्तयेद्यस्तु वक्ष्यमाणैकरूपकम् ।
भुवनेशत्वमाप्नोति.................. ॥'

इत्युपक्रम्य This has been further elaborated as

'ब्रह्मादिकारणानां तु विग्रहं यः सदा स्मरेत् ।
पूर्वोक्तलक्षणं यच्च तन्मयत्वमवाप्नुयात् ॥
मन्त्रैश्च मन्त्रसिद्धिस्तु जपहोमार्चनाद्भवेत् ।
पूर्वोक्तरूपकध्यानात्सिध्यत्यत्र न संशयः ॥
ज्योतिर्ध्यानात्तु योगीन्द्रो योगसिद्धिमवाप्नुयात् ।
तन्मयत्वं तदाप्नोति योगिनामधिपो भवेत् ॥
शून्यध्यानाच्च शून्यात्मा व्यापी सर्वगतिर्भवेत् ।
समनाध्यानयोगेन योगी सर्वज्ञतां व्रजेत् ॥'

इति । एषां च षण्णामपि शिवात्मकत्वात्

'..............शिवं ध्यात्वा तु तन्मयः ।'

इत्याद्युक्तेः शिवैकमयतयैकैकानुप्रवेशेऽपि शिवात्मकस्वस्वरूपलाभो भवेत् इत्याह व्योमादिशब्दविज्ञानात् इत्यादि । व्योमादीनाम् एषां षण्णां शब्दानां शब्दनं शब्दः — परो विमर्शः, तदात्मकतया

पं० ८ क० पु० ज्योतिर्ध्यानाच्चेति पाठः ।
पं० ९ क० पु० अधिको भवेदिति पाठः ।
पं० १० क० पु० सर्वगतो भवेदिति पाठः ।
पं० १४ क० पु० शिवैकानुप्रवेश इति इयानेव पाठः ।
पं० १७ क० पु० शब्दः परविमर्शेति समस्तः पाठः ।

यत् विज्ञानम् — अनुभवः, तस्मात् परो — विमर्शैक-सारशिवैकात्म्यापत्तिलक्षणो , मोक्षो निःसंशयं भवेत् इति वाक्यार्थः । व्योमादिषट्क इति पाठे तु व्योमादेः षट्कस्य विशिष्टादनवच्छिन्नाज्ज्ञानात् इति व्याख्येयम् । न च अत्र भुवनादीनां क्रमो विवक्षितः इतीह व्योमादि इति प्रयुक्तम् ॥६४॥

ननु यद्ययं विश्वाकृतिस्तत्कथमस्य षड्विधत्व-मेवोक्तम् इत्याशङ्क्याह

विश्वाकृतित्वे देवस्य
　　तदेतच्चोपलक्षणम् ।
अनवच्छिन्नतारूढा-
　　ववच्छेदलयेऽस्य च ॥६५॥

रूढौ + अवच्छेद
= रूढावच्छेद

उपलक्षणम् एव भवति, अनेनैव निखिल-विश्वसंग्रहसिद्धेः । न केवलमेतद्विश्वाकारताया-मेवास्योपलक्षणं यावदन्यत्रापि इत्याह — अनवच्छि-

---

पं० ४ क० पु० अनवच्छिन्नादिति ज्ञानशब्दविहीनः पाठः ।

पं० १३ ख० पु० उपलक्षणमिव इति पाठः ।

पं० १५ क० पु० एवोपलक्षणं यावदत्रापीति पाठः ।

न्नतारूढौ इत्यादि। अवच्छेदलये इति अवच्छेदानां संकोचाधायिनां भुवनादीनां लये विश्वोत्तीर्णतायाम् इत्यर्थः। विश्वमयत्वेऽप्यस्य स्वस्वरूपान्न प्रच्यावः इत्याशयः। नन्वेवमुभयथापि अस्य नियतात्मकत्वावगमादवच्छेद एवोक्तो भवेत् इत्याशङ्क्योक्तम् अनवच्छिन्नतारूढाविति। अस्य हि विश्वमयत्वेऽपि विश्वोत्तीर्णत्वादनवच्छिन्नतायामेव प्ररोहो भवेत्, एक एव हि स्वतन्त्रो बोधस्तथा तथा प्रस्फुरेत् इति ॥६५॥

ननु कथमेकदैव एकस्य विश्वमयत्वेऽपि विश्वोत्तीर्णत्वं संगच्छते इत्याशङ्काशान्त्यर्थमागमं संवादयति

उक्तं च कामिके देवः
सर्वाकृतिर्निराकृतिः।
जलदर्पणवत्तेन
सर्वं व्याप्तं चराचरम् ॥६६॥

दर्पणाद्यन्तःप्रतिबिम्बितं घटादि यथा दर्पणा-

पं० १७ क० पु० दर्पणान्तः इति आदिशब्दहीनः ख० पु० दर्पणातिरेकेणेति च पाठः।

पूर्णतया आरोहति

(x) देशकालपदार्थात्मा यद्यत् वस्तु यथा यथा तद्रूपेण या भाति तामश्रये संविदमकुलाम्।

दिव्यतिरेकेण प्रकाशमानमपि दर्पणाद्यनतिरिक्तमेव, अन्यथा दर्पणघटयोरन्योन्यं वैविक्त्येन भानं स्यात्, तथैव प्रकाशात्मना शिवेनापि स्थावरजङ्गमात्मकमिदं विश्वं स्वेच्छया स्वस्वरूपातिरिक्तायमानत्वेन अवभासितं सत्, व्याप्तं प्रकाशमानतान्यथानुपपत्त्या स्वस्वरूपानतिरेकेणैव क्रोडीकृतम्, embraced अत एवायं विश्वमयत्वेऽपि विश्वोत्तीर्णस्तदुत्तीर्णत्वेऽपि तन्मयः इत्युभयथापि न कश्चिद्दोषः । अत एवोक्तं—सर्वाकृतिर्निराकृतिरिति । सर्वाकृतिः विश्वमयः, निराकृतिः विश्वोत्तीर्णः । आवृत्त्या तत्त्वेऽपि तदुत्तीर्णः—इति च । तदेवमयमेक एव प्रकाशात्मा परमेश्वरः सर्वतो जृम्भते इतीश्वराद्वयमेव परमार्थतः ॥६६॥

ननु भावानां तदपेक्षया पृथक्प्रकाशानुपपत्तेर्मा नाम तदतिरेकेण सत्ता भूत् इति भावापेक्षया

पं० १ ख० पु० दर्पणानतिरिक्तमिति पाठः ।

पं० ३ क० पु० तथा प्रकाशात्मना इत्येव शब्दहीनः पाठः ।

पं० ४ ग० पु० इदं जगत् स्वेच्छयेति पाठः ।

पं० ५ क० पु० अवसितमिति पाठः ।

पं० ६ क० पु० स्वरूपानतिरिक्तत्वेनैवेति पाठः ।

पं० १३ क० पु० परमार्थ इति पाठः ।

प्रकाशात्मक एक एवेश्वरः इत्यास्तां तावदेतत् । यत्पुनर्विभुत्वादि धर्मजातं तस्योक्तं, तदपेक्षया धर्म-धर्मिणोर्धर्माणां च परस्परं भेदस्य अनपह्नव-नीयत्वाद् योऽयं भेद उल्लसितः स कथं वार्यते येन एक एवेश्वरः इत्यद्वयवादनिर्वाहः स्यात् इत्याशङ्क्याह

न चास्य विभुताद्योऽयं
धर्मोऽन्योन्यं विभिद्यते ।

न च विभुताद्योऽयं अस्य स्वरूपातिरिक्तस्तद-तिशायकः कश्चित् धर्मः अपि तु स्वरूपमेवैतत् । विभुत्वं हि व्यापकत्वमुच्यते, तच्च स्वव्यतिरिक्ते व्याप्ये सति स्यात्, न च परं प्रकाशमपेक्ष्य दिगादि किंचित्संभवेत् इति किं नाम व्याप्नुयात् । नित्य-त्वमपि नास्य धर्मः—तस्य कालत्रयानुगामिरूपत्वात्, अस्य चाकालकलितत्वात् । यदभिप्रायेणैव 'सकृद्वि-भातोऽयमात्मा' इत्याद्युक्तम् । एवं विश्वाकृतित्व-

पं० ३ ख० पु० परस्परस्य भेदस्येति पाठः ।

पं० ५ क० पु० निर्वाह इत्याशङ्क्येति पाठः ।

पं० ६ ख० पु० अतिरिक्ताधिशायक इति पाठः ।

पं० १३ क० पु० नित्यत्वमस्य नापि धर्मः तत्र कालत्रयानुगामित्वादस्येति पाठः ।

'रागाद्यकलुषोऽस्म्यन्तः शून्योऽहं कर्तृतोज्झितः ।'

इत्याद्युक्तयुक्त्या चित्रस्वभावस्य, यद्वा

'तेनाजडस्य भागस्य पुद्गलाण्वादिसंज्ञिनः ।
अनावरणभागांशे वैचित्र्यं बहुधा स्थितम् ॥'

इत्यादिनीत्या चित्राकारस्य

'अतः कंचित्प्रमातारं प्रति प्रथयते प्रभुः ।
पूर्णमेव निजं रूपं कंचिदंशांशिकाक्रमात् ॥'

इत्याद्युक्त्या चित्रः शाम्भवाद्यावेशात्मा प्रकटितः, इह इति — अस्मिन्नाह्निके । ययोर्बन्धमोक्षयोः संग्रहेण संक्षेपेण एषोऽर्थः प्रकटितः इत्यनेनैव संबन्धः ॥३३०॥

ननु आत्मनः स्वरूपप्रथनमेव 'मोक्षः' इत्युक्तम्, आत्मा चैक एव अखण्डः इति तत्प्रथात्मनो मोक्षस्यापि वैचित्र्यं कुतस्त्यम् ? इत्याशङ्क्याह

मिथ्याज्ञानं तिमिरमसमान्
दृष्टिदोषान्प्रसूते

---

पं० ३ क० पु० तेनाजडविभागस्येति, संज्ञित इति च पाठः ।

पं० ५ ख० पु० चित्रस्वभावस्य इति पाठः ।

पं० ८ क० पु० इत्याद्युक्तयुक्त्या इति पाठः ।

तत्सद्भावाद्विमलमपि त-
द्भाति मालिन्यधाम ।
यत्तु प्रेक्ष्यं दृशि परिगतं
तैमिरीं दोषमुद्रां
दूरं रुन्धेत्प्रभवतु कथं
तत्र मालिन्यशङ्का ॥ ३३१ ॥

तिमिरम्—आणवमलमेव मिथ्याज्ञानं भेदप्रथात्मकम् अपूर्णं वेदनं, दृष्टेः पूर्णायाः संवित्तेः, असमान्—आत्मनि अनात्माभिमानादिरूपान् दोषान् जनयति इति मिथ्याज्ञानसद्भावात् विमलं पूर्णमपि तत् ज्ञानं मालिन्यधाम भाति—स्वस्वातन्त्र्यादपूर्णेन आत्मना परिस्फुरति इत्येतावानर्थः इति व्यवह्रियते, यत् पुनरुपेयत्वेन प्रेक्षणीयम्—अवश्यज्ञातव्यं परप्रमात्रेकात्म पूर्णं ज्ञानं

'नाहं प्राणो नैव शरीरं न मनोऽहं
नाहं बुद्धिर्नाहमहङ्कारधियौ च ।
योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदध्य ।'
तं संसारध्वान्तविनाशं हरिमीडे ।

पं० १३ क० पु० पुनरुपमेयत्वेनेति पाठः ।

इत्यादिनीत्या उद्वेष्टनक्रमेण विमर्शपदवीमारूढं सत्, मिथ्याज्ञानसमुत्थाम् अनात्मनि आत्माभिमानरूपां दोषमुद्रां दूरं रुन्ध्येत् – आत्मन्येव आत्माभिमानेन तिरस्कुर्यात्, तत्र का नाम मालिन्यशङ्का तत्र संभावनापि न भवेत् इति वस्तुवृत्तेन बन्धो मोक्षो वापि न नाम कश्चिदस्ति इति का वा नाम तत्र वैचित्र्यसंभावना स्यात् । अनेन चाभिप्रायेण

'संसारोऽस्ति न तत्त्वतस्तनुभृतां बन्धस्य वार्तैव का
बन्धो यस्य न जातु तस्य वितथा मुक्तस्य मुक्तिक्रिया ।
मिथ्यामोहकृदेष रज्जुभुजगच्छायापिशाचभ्रमो
मा किंचित्त्यज मा गृहाण विरम स्वस्थो यथावस्थितः ॥'

इत्यादि अन्यत्र उक्तम् । अथ च तिमिरेण नेत्ररोगविशेषेण दृष्टौ अन्यथाज्ञानात्मदोषजातमुत्पादितं प्रेक्ष्येण अञ्जनादिस्थानीयेन रोध्यते इति तत्र मालिन्यशङ्कापि न भवति इति औपम्यं ध्वनितम् ॥३३१॥

इदानीमस्य शास्त्रस्य परं गाम्भीर्यं मन्यमानो ग्रन्थकृत्, एतदर्थसतत्त्वमजानानैरपि अन्यैरन्यथा-

---

पं० ४ ख० पु० का नाम अग्रिमात्र संभावना न प्रभवेत् इति पाठः ।

बोधेन यत्किंचित् उत्तानमेव अन्यथा उच्यते, तान्प्राति अप्रस्तुतप्रशंसया उपहसितुमाह

भाववात ? हठाज्जनस्य हृदया-
न्याक्रम्य यन्नर्तयन्
भङ्गीभिर्विविधाभिरात्महृदयं
प्रच्छाद्य संक्रीडसे ।
यस्त्वामाह जडं जडः सहृदयं-
मन्यत्वदुःशिक्षितो
मन्येऽमुष्य जडात्मता स्तुतिपदं
त्वत्साम्यसंभावनात् ॥३३२॥

हे भाववात–नीलाद्यर्थ ? आत्मनो हृदयं तेन आत्मतथ्यं रूपं गोपयित्वा जनस्य सर्वस्यैव वादिनो हृदयानि आशयान् बलात्कारेण आक्रम्य

'अद्यास्मानसतः करिष्यति सतः किं नु द्विधा वाप्ययं
किं स्थास्नूनुत नश्वरानुत मिथोभिन्नानभिन्नानुत ।
इत्थं सद्वदनावलोकनपरैर्भावैर्जगद्वर्तिभि-
र्मन्ये मौननिरुद्ध्यमानहृदयैर्दुःखेन तैः स्थीयते ॥'

पं० ७ ग० पु० सहृदयंमन्योऽत्र दुःशिक्षित इति पाठः ।
पं० १७ ग० पु० दुःखमतः स्थीयते इति पाठः ।

इत्यादिस्थित्या विविधाभिर्भङ्गीभिः नर्तयन् यत् संक्रीडसे—नटवत् अतात्त्विकेन रूपेण समुल्लससि, अतः स सर्वो वादी असहृदयमपि आत्मानं सहृदयत्वेन मन्यमानोऽत एव दुःशिक्षितो मिथ्याभिमानात् अकिंचिज्ज्ञः, त्वां भाववातं, जडम्—अचेतनम् आह, अतोऽस्माभिरुत्प्रेक्ष्यते—यत् अमुष्य वादिनो वस्तुतश्चैतन्यस्वभावेन भवता यत् साम्यं तस्य संभावनात् भाववत्त्वमेव जडात्मा इति यदुच्यते सा अस्य निन्दास्थाने स्तुतिः। भावानां हि वस्तुतश्चैतन्यमेव रूपम् अचेत्यमानत्वे हि तेषां न किंचिद्रूपं स्यात्, अतस्तदेव ये न जानते ते जडेभ्योऽपि जडाः इति कथं च तेषां चेतनात्मकैर्भावैः निन्दापर्यवसायि साम्यं स्यात् इति भावः । एवं प्रकृतेऽपि अस्य ग्रन्थस्य यस्तत्त्वं न जानाति मा ज्ञासीत्, प्रत्युत अन्यथापि यत्किंचन वक्ति इत्यसावेव जडो, न पुनरस्य ग्रन्थस्य कश्चिद्दोषः इत्यर्थः ॥३३२॥

ननु यद्येवं तर्हि एतच्छास्त्राधिगमाय केषांचन

पं० ६ क० पु० भावानां हि भावना वस्तुत इति पाठः ।

तत्सद्भावाद्विमलमपि त-
द्भाति मालिन्यधाम ।
यत्तु प्रेक्ष्यं दृशि परिगतं
तैमिरीं दोषमुद्रां
दूरं रुन्धेत्प्रभवतु कथं
तत्र मालिन्यशङ्का ॥ ३३१ ॥

तिमिरम्—आणवमलमेव मिथ्याज्ञानं भेदप्रथात्मकम् अपूर्णं वेदनं, दृष्टेः पूर्णायाः संवित्तेः, असमान्—आत्मनि अनात्माभिमानादिरूपान् दोषान् जनयति इति मिथ्याज्ञानसद्भावात् विमलं पूर्णमपि तत् ज्ञानं मालिन्यधाम भाति—स्वस्वातन्त्र्यादपूर्णेन आत्मना परिस्फुरति इत्येतावानर्थः इति व्यवह्रियते, यत् पुनरुपेयत्वेन प्रेक्षणीयम्—अवश्यज्ञातव्यं परप्रमात्रेकात्म पूर्णं ज्ञानं

'नाहं प्राणो नैव शरीरं न मनोऽहं
नाहं बुद्धिर्नाहमहङ्कारधियौ च ।
योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदध्य ।'
तं संसारध्वान्तविनाशं हरिमीडे ।

पं० १३ क० पु० पुनरुपमेयत्वेनेति पाठः ।

इत्यादिनीत्या उद्वेष्टनक्रमेण विमर्शपदवीमारूढं सत्, मिथ्याज्ञानसमुत्थाम् अनात्मनि आत्माभिमानरूपां दोषमुद्रां दूरं रुन्ध्येत् – आत्मन्येव आत्माभिमानेन तिरस्कुर्यात्, तत्र का नाम मालिन्यशङ्का तत्र संभावनापि न भवेत् इति वस्तुवृत्तेन बन्धो मोक्षो वापि न नाम कश्चिदस्ति इति का वा नाम तत्र वैचित्र्यसंभावना स्यात् । अनेन चाभिप्रायेण

'संसारोऽस्ति न तत्त्वतस्तनुभृतां बन्धस्य वार्तैव का
बन्धो यस्य न जातु तस्य वितथा मुक्तस्य मुक्तिक्रिया ।
मिथ्यामोहकृदेष रज्जुभुजगच्छायापिशाचभ्रमो
मा किंचित्त्यज मा गृहाण विरम स्वस्थो यथावस्थितः ॥'

इत्यादि अन्यत्र उक्तम् । अथ च तिमिरेण नेत्ररोगविशेषेण दृष्टौ अन्यथाज्ञानात्मदोषजातमुत्पादितं प्रेक्ष्येण अञ्जनादिस्थानीयेन रोध्यते इति तत्र मालिन्यशङ्कापि न भवति इति औपम्यं ध्वनितम् ॥३३१॥

इदानीमस्य शास्त्रस्य परं गाम्भीर्यं मन्यमानो ग्रन्थकृत्, एतदर्थसतत्त्वमजानानैरपि अन्यैरन्यथा-

---

पं० ४ ख० पु० का नाम अग्रिमात्र संभावना न प्रभवेत् इति पाठः ।

बोधेन यत्किंचित् उत्तानमेव अन्यथा उच्यते, तान्प्रति अप्रस्तुतप्रशंसया उपहसितुमाह

भावव्रात ? हठाज्जनस्य हृदया-
न्याक्रम्य यन्नर्तयन्
भङ्गीभिर्विविधाभिरात्महृदयं
प्रच्छाद्य संक्रीडसे ।
यस्त्वामाह जडं जडः सहृदयं-
मन्यत्वदुःशिक्षितो
मन्येऽमुष्य जडात्मता स्तुतिपदं
त्वत्साम्यसंभावनात् ॥३३२॥

हे भावव्रात—नीलाद्यर्थ ? आत्मनो हृदयं तेन आत्मतथ्यं रूपं गोपयित्वा जनस्य सर्वस्यैव वादिनो हृदयानि आशयान् बलात्कारेण आक्रम्य

'अद्यास्मानसतः करिष्यति सतः किं नु द्विधा वाप्ययं
किं स्थास्नूनुत नश्वरानुत मिथोभिन्नानभिन्नानुत ।
इत्थं सद्वदनावलोकनपरैर्भावैर्जगद्वर्तिभि-
र्मन्ये मौननिरुद्ध्यमानहृदयैर्दुःखेन तैः स्थीयते ॥'

---

पं० ७ ग० पु० सहृदयंमन्योऽत्र दुःशिक्षित इति पाठः ।
पं० १७ ग० पु० दुःखमतः स्थीयते इति पाठः ।

इत्यादिस्थित्या विविधाभिर्भङ्गीभिः नर्तयन् यत् संक्रीडसे—नटवत् अतात्त्विकेन रूपेण समुल्लससि, अतः स सर्वो वादी असहृदयमपि आत्मानं सहृदयत्वेन मन्यमानोऽत एव दुःशिक्षितो मिथ्याभिमानात् अकिंचिज्ज्ञः, त्वां भावव्रातं, जडम्—अचेतनम् आह, अतोऽस्माभिरुत्प्रेक्ष्यते—यत् अमुष्य वादिनो वस्तुतश्चैतन्यस्वभावेन भवता यत् साम्यं तस्य संभावनात् भाववत्त्वमेव जडात्मा इति यद्युच्यते सा अस्य निन्दास्थाने स्तुतिः। भावानां हि वस्तुतश्चैतन्यमेव रूपम् अचेत्यमानत्वे हि तेषां न किंचिद्रूपं स्यात्, अतस्तदेव ये न जानते ते जडेभ्योऽपि जडाः इति कथं च तेषां चेतनात्मकैर्भावैः निन्दापर्यवसायि साम्यं स्यात् इति भावः । एवं प्रकृतेऽपि अस्य ग्रन्थस्य यस्तत्त्वं न जानाति मा ज्ञासीत्, प्रत्युत अन्यथापि यत्किंचन वक्ति इत्यसावेव जडो, न पुनरस्य ग्रन्थस्य कश्चिद्दोषः इत्यर्थः ॥३३२॥

ननु यद्येवं तर्हि एतच्छास्त्राधिगमाय केषांचन

---

पं० ६ क० पु० भावानां हि भावना वस्तुत इति पाठः ।

परेषां विदुषामभ्यर्थना क्रियतां, यदत्र यथावस्त्वेव बुद्ध्वा द्वेषो मा कार्यः ? इत्याशङ्क्याह

इह गलितमलाः परावरज्ञाः अ तथा ह के जानने वाले
शिवसद्भावमया अधिक्रियन्ते ।
गुरवः प्रविचारणे यतस्तद्-
विफला द्वेषकलंकहानियाच्ञा ॥३३३॥

इह द्वये पुरुषाः सन्ति — अनायातशक्तिपाता आयातशक्तिपाताश्च, तत्र पूर्वेषां शतशोऽभ्यर्थितानाम् एतदधिगमाय मनोऽपि न प्रसरति, इत्यत्र अवधातव्यम्, द्वेषो माकार्यः इत्यभ्यर्थनाया असामर्थ्यम् । अपरे च अनभ्यर्थिता अपि स्वयमेव एतदधिगमाय प्रवर्तन्ते इति तत्रापि एवमभ्यर्थनाया वैयर्थ्यम् । तदाह 'द्वेषकलङ्कहानियाच्ञा' इति । आयातशक्तिपाताश्च कीदृशाः ? इत्याह गलितमलाः इति, गलितं मलम् — अज्ञानं येषां ते तथाविधाः, अत एव च परम् आदिमम् अनुत्तरम् अवरम् अन्त्यं विसर्गं च ये जानते ते पराहंपरामर्शात्मकमन्त्रवी-

पं० ५ ग० पु० प्रविचारणे धियस्तदिति च पाठः ।

र्यज्ञाः इत्यर्थः, अत एव शिवसद्भावमयाः — परप्रमात्रेकात्मज्ञानशालिनः इति यावत्, अत एव च गुरवः — तात्त्विकार्थोपदेशिनः इति — एतदधिगमाय त एव परमधिकारिणः इत्युक्तं यतः प्रविचारणेऽधिक्रियन्ते इति, यद्वक्ष्यति

'गुरोर्लक्षणमेतावदादिमान्त्यं च वेदयेत् ।
पूज्यः सोऽहमिव ज्ञानी भैरवो देवतात्मकः ॥'

इति ॥२३३॥

इह आह्निकादाह्निकान्तरस्य संचयन्यायेन परस्परमनुस्यूततां दर्शयितुम् एकेनैव श्लोकेन तत्पर्यन्तप्रारम्भयोरुपसंहारोपक्रमौ करोति, इति 'अस्य ग्रन्थकारस्य शैली' — इति श्लोकस्य प्रथमार्धेन आह्निकार्थमुपसंहरति

तन्त्रालोकेऽभिनवरचिते-
ऽमुत्र विज्ञानसत्ता-
भेदोद्गारप्रकटनपटा-
वाह्निकेऽस्मिन्समाप्तिः ।

पं० ३ क० पु० अधिगमाय अत एव परमाधिकारिण इति पाठः ।
पं० ६ ग० पु० आद्यमन्त्यं चेति पाठः ।

पटौ इति पाक्तिकः पुंवद्भावः । इति शिवम् ॥

श्रीशृङ्गाररथादवाप्य कृतिनो जन्मानवद्यक्रमं
श्रीमच्छङ्खधरात्परं परिचयं विद्यासु सर्वास्वपि ।
श्रीकल्याणतनोः शिवादधिगमं सर्वागमानामपि
व्याख्यातं प्रथमाह्निकं जयरथेनात्रावधेयं बुधैः ॥

---

इति श्रीमन्महामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तविरचिते तन्त्रालोके
श्रीमद्राजानकजयरथकृतप्रकाशाभिख्यव्याख्योपेते विज्ञान-
भेदप्रकाशनं नाम प्रथममाह्निकं समाप्तिमगमत् ॥

एतत्कश्मीरभूपालसंश्रितेन प्रकाशितम् ।
सता मुकुन्दरामेण सन्मुदे स्ताच्छिवेर्पितम् ॥

श्रीशिवार्पणमस्तु ॥

---

अथ

# श्रीतन्त्रालोकस्य

श्रीमन्महामाहेश्वराचार्याभिनवगुप्तपादविरचितस्य
श्रीमदाचार्यजयरथकृतप्रकाशाख्यव्याख्योपेतस्य

## द्वितीयमाह्निकम्

जयतान्नतजनजयकृत्सजयो रुद्रो विनाभ्युपायं यः ।
पूरयति कं न कामं कामं कामेश्वरत्वेन ॥१॥

इदानीं

'यो हि यस्माद् गुणोत्कृष्टः स तस्मादूर्ध्व उच्यते ।'

इति-स्थित्या आणवादीनां यथायथमुत्कर्षादिह पूर्व-पूर्वमेवाभिधानमिष्यते इत्युपेयैकरूपत्वेन शांभवा-

---

पं० २ क० ख० पु० कः पूरयति किं न कामं कामं वागीश्वरत्वेनेति पाठः ।
पं० ६ क० पु० अभिधानं करिष्यते इति इत्युपायैकेति च पाठः ।

दप्यनुपायस्योत्कृष्टत्वम्, इति—प्रथमं तत्स्वरूपमेवाभिधातुमाह्निकान्तरारम्भं द्वितीयार्धेन प्रतिजानीते

यत्तत्राद्यं पदमविरतानुत्तरज्ञप्तिरूपं
तन्निर्णेतुं प्रकरणमिदमारभेऽहं द्वितीयम् ॥१॥

तन्निर्णयमेवाह

अनुपायं हि यद्रूपं
कोऽर्थो देशनयात्र वै ।
सकृत्स्याद्देशना पश्चा-
दनुपायत्वमुच्यते ॥२॥

वै-शब्दोऽवधारणे, तेन नैव कश्चिदर्थः इत्यर्थः । अत्रैव समाधत्ते 'सकृत्स्यात्' इत्यादिना, देशना इत्युपलक्षणं—तेन सिद्धदर्शनाद्यपि ग्राह्यं, यदुक्तम्

'सिद्धानां योगिनीनां च दर्शनं चरुभोजनम् ।
कथनं संक्रमः शास्त्रे साधनं गुरुसेवनम् ॥
इत्याद्यो निरुपायस्य संक्षेपोऽयं वरानने ।'

इति । सकृदिति—न पुनरुपायानुभवः पौनःपुन्येनेत्यर्थः । अत एवाह 'पश्चादनुपायत्वमुच्यते' इति,

---

पं० ३ क० पु० यत्र त्वाद्यं परमशिवतानुत्तरेति, ख० पु० यत्त्वत्राद्यमिति पाठः ।
पं० ४ क० ख० पु० मिदं त्वारभेयं द्वितीयमिति पाठः ।

आणवादौ असकृद्भाव्यमानो हि देशनादि उपेयप्राप्तिं विदधाति इति तत्र तथात्वमुक्तम्, इह तु न तथा इत्यनुपायत्वं, पर्युदासस्य 'अनुदरा कन्या' इति वदल्पार्थत्वेऽपि भावात् अल्पोपायत्वमित्यर्थः—प्राप्तव्ये हि प्राप्ते किं नाम निरर्थकैरायासकारिभिर्भावनादिभिरिति भावः, यदुक्तम्

'उपायैर्न शिवो भाति भान्ति ते तत्प्रसादतः ।
स एवाहं स्वप्रकाशो भासे विश्वस्वरूपकः ॥
इत्याकर्ण्य गुरोर्वाक्यं सकृत्केचन निश्चिताः ।
विना भूयोऽनुसंधानं भान्ति संविन्मयाः स्थिताः ॥'

इति ॥ २ ॥

नन्वत्र प्रसज्यप्रतिषेधपक्षावलम्बनेनाविद्यमानोपायत्वमेव, इति मुख्योऽर्थः कस्मान्न व्याख्यातः ? इत्याशंक्याह

अनुपायमिदं तत्त्व-
मित्युपायं विना कुतः ।
स्वयं तु तेषां तत्तादृक्
किं ब्रूमः किल तान्प्रति ॥३॥

पं० १२ क० पु० नेन विद्यमानोपायमेवेति पाठः ।

'इदमनुपायं तत्त्वम्' इत्याद्युपदेशादिना केनचिदुपायेनावश्यं भाव्यम्, अन्यथा लक्षणमुपायमन्तरेण कथं सिध्येत्, इत्युक्तम् 'इत्युपायं विना कुतः' तेन सकृदुपदेशादिना केनचिदुपायेनावश्यं भाव्यम्, अन्यथा ह्यनुपायपरतत्त्वज्ञप्तिरेव न स्यात् । ननु स्वविमर्शबलात्स्वयमेव प्राप्तप्राप्तव्या अपि केचिद् दृश्यन्ते, इति—किं सकृदुपदेशाद्यात्मना स्वल्पेनाव्युत्पन्नेन? इत्याशंक्याह 'स्वयमित्यादिना' तदित्यनुपायं परप्रकाशात्मकं रूपं, किं ब्रूम इति—नहि तदधिकारेण शास्त्रस्यैव प्रवृत्तिर्भवेदिति भावः, तदुक्तम्

'तत्त्वज्ञस्य वृथा शास्त्रं......... ।'

इति । यदभिप्रायेणैव

'संसाराम्बुनिधिं यः स्यात्तितीर्षुः कश्चिदुत्तमः'
नात्यन्ततज्ज्ञो नो मूर्खः सोऽस्मिञ्छास्त्रेऽधिकारवान्' ।

इत्यादावत्यन्ततज्ज्ञस्य शास्त्रे नाधिकार उक्तः, तेन वयमर्वाग्दर्शिनोऽप्यदृष्टेऽर्थे शास्त्रैकदिव्यचक्षुष आरु-

---

पं० २ ग० पु० उपायान्तरेण कथमिति पाठः ।

पं० ८ ग० पु० अव्युत्पन्नत्वेन इति पाठः ।

पं० १४ संसारेति पदद्वयं ग० पुस्तकात्पूरितमस्ति ।

रुच्छूनायातशक्तिपातान्प्रत्येव किंचन ब्रूमः—तेषां ह्येवमुपायमन्तरेण न कदाचिदप्युपेयप्राप्तिर्भवेत् इत्येवमुक्तम्, यद्वक्ष्यति

'नानिर्मलचितः पुंसोऽनुग्रहस्त्वनुपायकः ।'

इति ॥ ३ ॥

ननु यद्येवं तर्हि अल्प एव कश्चिदुपायांशः समुपदिश्यतां येनोपदेश्यजनस्य सुखमेव उपेयप्राप्तिः स्यात्, किं बह्वायासदायिभिरन्यैरुपायैः? इत्याशंक्याह

यच्चतुर्धोदितं रूपं
विज्ञानस्य विभोरसौ ।
स्वभाव एव मन्तव्यः
स हि नित्योदितो विभुः ॥४॥

यच्चतुर्धा—अनुपायादिभेदेन विज्ञानस्य रूपमुक्तं तद्विभोः परमेश्वरस्यैव स्वातन्त्र्यं ज्ञेयम्, स एव हि स्वस्वातन्त्र्याद्‌अतिनिर्ह्रासतारतम्यादियोगाद्विचित्रेणोपदेश्यजनात्मना प्रस्फुरन् तदनुसारमेव तत्तदुपाय-

---

पं० ६ क० ख० पु० समुद्दिश्यतामिति पाठः ।

पं० १२ ग७ पु० स हि संविन्मयः प्रभुरिति पाठः ।

पं० १९ क० पु० स्वातन्त्र्यात्तारतम्येति पाठः ।

वैचित्र्यमप्याभासयेत्। नन्वेक एव विचित्रेण रूपेण च स्फुरति, इति किमेतत्? इत्याशंक्याह 'स हीत्यादि' नित्योदित इति – अप्रच्युतप्राच्यस्वरूपः, अत एव 'विभुः' व्यापकः – तत्तद्वैचित्र्यग्रहणकालेऽप्यनुगत एवेत्यर्थः ॥ ४ ॥

अत एवाह

एतावद्भिरसंख्यातैः
स्वभावैर्यत्प्रकाशते ।
केऽप्यंशांशिकया तेन
विशन्त्यन्ये निरंशतः ॥ ५ ॥

एतावद्भिरिति – चतुर्भिः, असंख्यातैरिति – तत्तदवान्तरभेदात्, तेनेति – अनेकेन स्वभावेन प्रकाशनात् ॥५॥

न केवलमत्रेयदेव वैचित्र्यं यावदन्यदप्यस्तीत्याह

तत्रापि चाभ्युपायादि-
सापेक्षान्यत्वयोगतः ।
उपायस्यापि नो वार्या
तदन्यत्वाद्विचित्रता ॥ ६ ॥

पं० १४ क० पु० सापेक्षत्वान्ययोगत इति पाठः ।

उपायस्यापीति अपिशब्दो भिन्नक्रमः, तेन नो वार्या तदन्यत्वादपि, इति व्याख्येयम्, एतच्च प्रथमाह्निक एव वितत्य निर्णीतम्, इति – नेह पुनरायस्तम् ॥६॥

एवमेतत् प्रसंगादभिधाय प्रकृतमेवाह

तत्र ये निर्मलात्मानो
　　भैरवीयां स्वसंविदम् ।
निरुपायामुपासीना-
　　स्तद्विधिः प्रणिगद्यते ॥७॥

ये केचन तीव्रतीव्रशक्तिपातानुविद्धा विकल्पकलंकान्मुक्ताः, भैरवीयां पूर्णाम्, अत एवानुपायाम् – अनपेक्षाम्, आत्मसंविदमाविष्टाः, तेषां विधिः – पूर्णसंविदावेशक्रमात्मा प्रकारः, प्रकर्षेण निगद्यते – युक्तियुक्तत्वेन भण्यते इत्यर्थः ॥ ७ ॥

तदेवाह

तत्र तावत्क्रियायोगो
　　नाभ्युपायत्वमर्हति ।

---

पं० ४ क० पु० शक्तिपातविकल्पान्मुक्ता इति पाठः ।

पं० १२ क० पु० आवेशात्मप्रकार इति पाठः ।

उपायः खलु करणे प्रसृते, अतश्च पूर्णेन भाव्यमेव, इति सर्वेषामविवादः, न चात्रैवं — क्रियादयो हि संवेद्यमानत्वात्संविन्निष्ठा एव, इति संविच्छक्तिं विना अप्रसिद्धत्वात् कथं तत्रोपायतामासादयेयुः, अतः प्रत्युत क्रियादीनां बहिराभासने संविदुपायः, इति युक्तम् ॥ अत एवाह

स हि तस्मात्समुद्भूतः
प्रत्युत प्रविभाव्यते ॥८॥

तस्मादित्यनुपायात्संवित्तत्त्वात् ॥८॥

अथ यद्यस्य क्रियादि न कारकम् अपि तु ज्ञापकम् इति उच्यते, तदपि न युज्यते, इत्याह ।

ज्ञप्तावुपाय एव स्या-
दिति चेज्ज्ञप्तिरुच्यते ।
प्रकाशत्वं स्वप्रकाशे
तच्च तत्रान्यतः कथम् ॥९॥

इह जडस्तावत् स्वयमप्रकाशात्मा स्वात्मनो न

---

पं० ३ क० पु० एवेति संविदः प्रसिद्धत्वात्कथमिति पाठः ।

प्रकाशते, अपि तु परस्य, इति – पर एवास्य प्रकाशः, अजडस्तु स्वयं प्रकाशात्मा स्वात्मन एव प्रकाशते, न परस्य, इति – न परोऽस्य प्रकाशोऽपितु स्व एव अस्य प्रकाशः, तस्यापि परप्रकाशत्वे ह्यप्रकाशात्मत्वात् जाड्यं स्यात्, अत एवाह 'स्वप्रकाशे तच्च तत्रान्यतः कथम्' इति प्रकाशत्वम्, एवं चान्योऽपि स्वप्रकाशो वा स्यात् अन्यथा वा, स्वप्रकाशत्वे प्रथमस्यैव तथाभाव उच्यताम्, अनेनापि कोऽर्थः, अन्यथात्वे तस्यापि जाड्यापत्तिः, इति प्रकाशत्वात्तत्प्रकाशनाय प्रमात्रन्तरापेक्षायामनवस्थापत्तिः, इति सर्वेषामेव अप्रकाशात्मत्वान्न किंचिदपि प्रकाशेत, इति – सर्वमिदमन्धं स्यात् ॥९॥

तदाह

संवित्तत्त्वं स्वप्रकाश-
मित्यस्मिन्किं नु युक्तिभिः ।

---

पं० २ ख० पु० अजडस्तद्द्वयं प्रकाशेति पाठः ।

पं० ७ क० पु० स्वप्रकाशकः स्यादिति पाठः ।

पं० ८ क० पु० तथा उत्पद्यतामिति ख० पु० भाव उद्यतामिति पाठः ।

तदभावे भवेद्विश्वं
जडत्वादप्रकाशकम् ॥१०॥

किं नु युक्तिभिरिति—बह्वीभिर्युक्तिभिर्न किंचित्प्रयोजनमित्याह, एकैव हि युक्तिरियं सर्वातिशायिनी—यत्संविदः स्वप्रकाशत्वं यदि न स्यात्, न किंचिदपि प्रकाशेत इति ॥१०॥

ननु यदि नाम अत्र न बाह्यः क्रियादिः प्रगल्भते तदा गुरुज्ञानादि उपायतां भजताम्? इत्याशंक्याह

यावानुपायो बाह्यः स्या-
दान्तरो वापि कश्चन ।
स सर्वस्तन्मुखप्रेक्षी
तत्रोपायत्वभाक्कथम् ॥११॥

यावानिति—नानाशास्त्रोपदिष्टः, सर्व इति—बाह्य आन्तरो वा, तन्मुखप्रेक्षीति—संविदधीनसिद्धिरित्यर्थः, यदपेक्ष्य हि यस्य सिद्धिरेवं भवति स कथं तस्य उपायतां यायादिति भावः ॥११॥

---

पं० १६ क० घ० पु० यदपेक्षा हि यस्य सिद्धिरेव भवेत्स कथमिति पाठः ।

अत एवाह

त्यजावधानानि ननु क्व नाम
धत्सेऽवधानं विचिनु स्वयं तत् ।
पूर्णोऽवधानं न हि नाम युक्तं
नापूर्णमभ्येति च सत्यभावम् ॥१२॥

इह उपदिश्यमानेन स्वयमेव तावदवधातव्यम् इति परामर्शनीयम्, किं पूर्णे रूपे उतापूर्णे? तत्र तावत्पूर्णे रूपेऽवधानं न युक्तम्, अवधानं खलु–प्रतिनियतावधेयविषयनिष्ठम् ऐकाग्र्यम्, अतश्च भेदप्रधानं न किंचित्फलमादातुं समर्थम् ॥१२॥

तस्मादसामर्थ्यवैयर्थ्योपहतत्वादवधानस्यापि यत्र नास्ति उपायभावस्तत्र का वार्ता तदनुप्राणितस्य भावनादेः? इत्याह

तेनावधानप्राणस्य
भावनादेः परे पथि ।
भैरवीये कथंकारं
भवेत्साक्षादुपायता ॥१३॥

पं० ३ ख० पु० धर्मेऽवधानमिति पाठः ।

पं० ८ क० पु० अवधानं खलु अप्रतिनियतेति पाठः ।

भैरवीये इति—पूर्णे ॥१३॥

ये पुनरनेनापि उपायेनानुपायं परं तत्त्वमनुसरन्ति तान्प्रति किमुच्यते ? इत्याह

येऽपि साक्षादुपायेन
तद्रूपं प्रविविक्षते ।
नूनं ते सूर्यसंवित्त्यै
खद्योताधित्सवो जडाः ॥१४॥

तदुक्तम्

'अपरोक्षे भवत्तत्त्वे सर्वतः प्रकटे स्थिते ।
यैरुपायाः प्रतन्यन्ते नूनं त्वां न विदन्ति ते ॥'

इति ॥ १४ ॥

अत्रैव निमित्तान्तरमप्याह

किं च यावदिदं बाह्य-
मान्तरोपायसंमतम् ।
तत्प्रकाशात्मतामात्रं
शिवस्यैव निजं वपुः ॥१५॥

---

पं० २ क० पु० तत्त्वमनुविशन्तीति पाठः ।

पं० ७ क० पु० खद्योतं लिप्सव इति पाठः ।

पं० ६ क० पु० प्रकटोदिते इति पाठः ।

पं० १६ क० पु० परं वपुः इति पाठः ।

इह खलु यत्किंचन उपायत्वेनाभीष्टं तदप्रकाशमानं प्रकाशमानं वा ? अप्रकाशमानं चेत् तस्य न किंचिदपि रूपं स्यात्, इति किं नाम उपायतां भजतां, प्रकाशमानं चेत् प्रकाशात्मा शिव एवावस्थितः, नहि तदतिरिक्तमन्यत्किंचिदुपपद्यते, इति – कस्योपायभावः, उपायेन हि उपेयाद्व्यतिरिक्तेन भाव्यं, तच्चात्र न युक्तम्, इति को नाम उपायोपेयभावार्थः ॥ १५ ॥

न केवलं भावनाद्येव उपायत्वेनाभीष्टमेवम्, यावदन्यदपीत्याह

नीलं पीतं सुखमिति
प्रकाशः केवलः शिवः ।
अमुष्मिन्परमाद्वैते
प्रकाशात्मनि कोऽपरः ॥१६॥
उपायोपेयभावः स्या-
त्प्रकाशः केवलं हि सः ॥१७॥

भावनादेः सुप्रसिद्धेऽपि उपायत्वे निरस्ते अन्यस्य

पं० १७ क० पु० उपायत्वेन निरस्ते अन्यत्र इति पाठः ।

कस्यचित्संभावनामात्रमपि माभूत्, इत्येवमुक्तं 'कोऽपर' इति, यत्र उपायत्वसंभावनापि स्यात् ॥१७॥

ननु यद्येवं तर्हि सर्वत्र प्रसिद्धोऽयं द्वैतव्यवहारः कथमपह्नूयते? इत्याशङ्क्याह

इदं द्वैतमयं भेद
इदमद्वैतमित्यपि ।
प्रकाशवपुरेवायं
भासते परमेश्वरः ॥१८॥

द्वैतव्यवहारोऽपि प्रकाशमानत्वात्प्रकाशात्मैवेत्यभिप्रायः, एतच्च बहूनां वादिनां मतम्—इति द्योतयितुम् 'अयं भेद' इति पुनरुपादानम्, यथा चाद्वैतप्रतिभासे प्रकाशात्मा परमेश्वर एक एव प्रतिभासते तथा द्वैतप्रतिभासेऽपि, इत्यर्थमौपम्यं कटाक्षयितुम् 'इदमद्वैतमित्यपि' इत्युपात्तम् ॥१८॥

ननु बाह्योऽर्थः प्रकाशमानत्वात्प्रकाशात्मैव इत्यास्ताम्, अन्योन्यं पुनरस्य भेदे किमायातम्, इत्यापतितमेव द्वैतम्? इत्याशङ्क्याह

---

पं० १३ क० पु० इत्युक्तमौपम्यमिति पाठः ।
पं० १९ क० पु० किमिदमापतितमिति पाठः ।

अस्यां भूमौ सुखं दुःखं
बन्धो मोक्षश्चितिर्जडः ।
घटकुम्भवदेकार्थाः
शब्दास्तेऽप्येकमेव च ॥१९॥

अस्यां भूमाविति – परमाद्वयदशायामित्यर्थः, 'एकार्था' इति – एकः प्रकाश एवार्थोऽभिधेयो येषां ते तथा, सुखदुःखादीनां हि प्रकाशातिरेकेण प्रातिस्विकं नियतं किंचन रूपं यदि स्यात् तदैवं संभावनापि भवेदिति भावः, अत एव

'घटो मदात्मना वेत्ति वेद्म्यहं च घटात्मना ।'

इत्यादिरन्यैरुक्तम् । ननु यद्येवं तर्हि तदभिधायकत्वशब्दाभिप्रायेणापि द्वैतं स्यात् ? इत्याह 'शब्दास्तेऽप्येकमेव च' इति, एकमिति – संवेद्यमानत्वात्संवेदनमेवेत्यर्थः ॥१९॥

ननु यदि नीलसुखादि प्रकाशमानत्वात्प्रकाश एव तर्हि तत्केन रूपेण प्रकाशते ? इत्याशंक्याह

---

पं० ६ क० पु० प्रकाशरूपोऽर्थोभिधेय इति पाठः ।
पं० ७ क० पु० प्रकाशव्यतिरेकेणेति पाठः ।
पं० १५ क० पु० नीलप्रकाशादि इति पाठः ।

प्रकाशे ह्यप्रकाशांशः
कथं नाम प्रकाशताम् ।
प्रकाशमाने तस्मिन्वा
तद्द्वैतास्तस्य लोपिताः ॥२०॥
अप्रकाशेऽथ तस्मिन्वा
वस्तुता कथमुच्यते ॥
न प्रकाशविशेषत्व-
मत एवोपपद्यते ॥२१॥

अप्रकाशांश इति—सुखादिजडोऽर्थः, कथं नामेति—केन रूपेणेत्यर्थः, तत्र यदि प्रकाशात्मनैव प्रकाशते तत्तस्य नीलसुखादेः स्वभावस्य दोषः स्यात्—नियतेन नीलत्वादिना बाह्येन रूपेण न भायात्प्रकाश एव शिष्येत इति यावत्, अथ अप्रकाशात्मना नियतेनैव रूपेण प्रकाशते तत्तस्य सत्तानिश्चय एव न भवेत्, नहि प्रकाशमन्तरेण नीलादीनां कदाचिदपि स्वरूपं दृष्टम्, 'अप्रकाशात्मना रूपेण प्रकाशते' इति वाचोयुक्तिश्च रिक्ता स्यात्, तदाह 'अप्रकाश' इत्यादि

पं० ४ ख० पु० तत्र लोपत इति पाठः ।
पं० १६ ग० पु० अप्रथात्मरूपेणेति पाठः ।

प्रकाशः पुनर्नीलादिपरिहारेणानीलादावपि प्रकाशते, नीलादिर्हि उपाधिः, स च स्वस्वातन्त्र्यविजृम्भामात्ररूपत्वान्न वास्तवः, इत्यखण्ड एक एव प्रकाश उज्जृम्भते, यन्महिम्नैव इदं तत्तन्नीलाद्याभासात्म विश्वं स्फुरेत्, अत एवाह 'न प्रकाशविशेषत्वमुपपद्यते' इति, अत इति—एकस्यैव अखण्डस्य प्रकाशस्य तत्तदाभासात्मना स्फुरणात्। ननु 'नीलप्रकाशोऽन्यः, पीतप्रकाशश्चान्य' इत्यादिरस्त्येव एषां भेदः, इति किमुक्तं 'न प्रकाशविशेषत्वमुपपद्यते' इति? नैतत्—औपाधिको ह्ययं भेदः, स च न वास्तवः—इत्युपपादितं बहुशः, नीलादयो हि प्रकाशत्वात्प्रकाशात्मका एव इति किं केन भेद्यम्, नहि स्वात्मनैव स्वात्मा भिद्यते इत्येतदुक्तम् 'न च प्रकाशैकरूपायां संविदि संविदन्तरमस्ति' एवं हि स्वरूपभेदकृते भेदव्यवहारे क्रियमाणे एकभेद-

---

पं० ४ क० पु० महिम्ना तत्तन्नीलानीलाभास इति पाठः ।
पं० १० क० पु० स एव वास्तव इति पाठः ।
पं० १२ क० पु० भेद्यते इत्येतद्युक्तमिति पाठः ।
पं० १३ क० पु० अस्ति ते एवमिति पाठः ।
पं० १४ क० पु० भेदवते इति पाठः ।

प्रकाशरूपत्वमेवोक्तं भवेत् इति गजस्नानतुल्यत्वं स्यात्, ततश्च पुनरपि 'एकैवाखण्डवित्' इत्येव पर्यवस्येत्, एवं च देशकालावपि प्रकाशदशामेवाधिशयानौ प्रकाश्यत्वात्प्रकाशैकात्म्यमेवावगाहमानौ कथंकारं प्रकाशस्य भेदाधायकौ स्याताम्, प्रकाशातिरेकाभ्युपगमे वा अनयोरत्र नित्यत्वव्यापकत्वाभ्यां भेदाधानेऽसामर्थ्यम्, इत्येक एवाखण्डः प्रकाशः, इति — मतान्तरसिद्धिमभिवाञ्छन्तः परे परं निरस्ताः ॥२१॥

तदाह

अत एकप्रकाशोऽय-
मिति वादेऽत्र सुस्थिते ।
दूरादावारिताः सत्यं
विभिन्नज्ञानवादिनः ॥२२॥

ननु यदि ज्ञानानि विभिन्नानि न संभवन्ति, तत् एकशब्दः किमपोहनायात्र प्रयुक्तः ? इत्याशंक्याह

---

पं० ६ क० पु० नित्यव्यापकाभ्यां भेदादावसामर्थ्यमिति पाठः ।
पं० ७ क० पु० इति सत्यानन्तरसिद्धिमिच्छन्तः परमिति पाठः ।

प्रकाशमात्रमुदित-
मप्रकाशनिषेधनात् ।
एकशब्दस्य न त्वर्थः
संख्या चिद्व्यक्तिभेदभाक् ॥२३॥

अप्रकाशः—प्रकाश्यो नीलादिर्बाह्योऽर्थस्तावन्निषिद्धः, अतः 'प्रकाशः केवलोऽस्ति' इत्येकशब्दस्यात्रासहायाद्वृत्तिः, तदुक्तं 'एकशब्दस्यार्थः प्रकाशमात्रमुदितम्' इति, न पुनः प्रकाशभेदभाक् इत्येकद्वित्र्यादिलक्षणः संख्यार्थो, येन—मतान्तराण्यप्यपोह्यतया संभावनीयानि स्युः ॥२३॥

अत एवात्र भेदागूरकं व्यवहारमात्रमपि न ज्ञायते, इत्याह

नैष शक्तिर्महादेवी
न परत्राश्रितो यतः ।

---

पं० ३ क० पु० नन्वर्थ इति पाठः ।
पं० ६ क० पु० एकशब्दस्यासहाया वृत्तिरिति पाठः ।
पं० ७ ख० पु० शब्दस्यार्थः प्रकाशमानं तदितरदितरदिति न पुनरिति पाठः ।
पं० ८ क० पु० एकद्वित्वादिलक्षणसत्तानन्तराण्यान्यापोह्यतयेति पाठः ।

न चैष शक्तिमान्देवो
न कस्याप्याश्रयो यतः ॥२४॥
नैष ध्येयो ध्यात्रभावा-
न्न ध्याता ध्येयवर्जनात् ।
न पूज्यः पूजकाभावा-
त्पूज्याभावान्न पूजकः ॥२५॥
न मन्त्रो न च मन्त्र्योऽसौ
न च मन्त्रयिता प्रभुः ।
न दीक्षा दीक्षको वापि
न दीक्षावान्महेश्वरः ॥२६॥

एष इति – व्याख्यातस्वरूपः परः प्रकाशः, शक्तिशक्तिमदादयो हि शब्दाः संबन्धिशब्दत्वान्नित्यसापेक्षाः इत्यन्यापूरणमन्तरेण स्वार्थ एव विश्रान्तिं लभन्ते, इति तैः क्रियमाणो व्यवहारो भेदनिष्ठ एव स्यात्, न चात्र परप्रमात्रेकात्मनि प्रकाशे भेदः कश्चिदस्ति, इत्येवं – व्यवहारमात्रतां कदाचिदपि स

पं० ५ क० पु० न पूजा पूजकेति पाठः ।

न यायात्, अतश्च नायं शक्तिः, सा हि परं शक्तिमन्तमाश्रित्यैव वर्तते इत्यनपेक्षत्वाद्भेदाविर्भावे प्रकाश एवैकः, इति प्रतिज्ञाया हानिः स्यात्, एवं शक्तिमच्छब्दव्यवहारोऽपि नायं, सोऽपि हि परं शक्तिलक्षणमर्थमुररीकृत्यैव वर्तते, इति भेद एवापतेत्, एवं ध्येयादावपि ज्ञेयं, मन्त्र इति मन्त्रस्य प्रणवादेर्वाच्यः, मन्त्रयिता मन्त्राणां पाठकः, न दीक्षेति कर्तृकर्मापेक्षित्वात्, अत्र च माहेश्वर्ये प्रभुत्वं हेतुः ॥ २४–२५–२६ ॥

अत एव यत्किंचन भेदाधायकं तदत्र नास्ति, इत्याह

स्थानासननिरोधार्घ-
　　संधानावाहनादिकम् ।
विसर्जनान्तं नास्त्यत्र
　　कर्तृकर्मक्रियोज्झिते ॥२७॥

---

पं० २ ग० पु० इत्यनाक्षेपादिति पाठः ।

पं० ४ क० ख० पु० सोऽपि स्वशक्तिलक्षणमुररीकृत्य इति पाठः ।

पं० ६ ख० पु० मन्त्र्य इति मन्त्रणस्येति पाठः ।

स्थानं—स्थापनमुद्रया भगवतोऽवस्थानम्, आसनं—संनिधानमुद्रया पूजां प्रति औन्मुख्यं, निरोधः—तत्रैवाविचलत्त्वेनावस्थानम्, अर्घोऽष्टाङ्गः, संधानं मन्त्रादिविषयम्, आवाहनं—अनभिमुखस्याभिमुखीकरणं, विसर्जनम् — अभिमुखीभूतस्यानभिमुखीकरणम्, एषामावाहनादिविसर्जनान्तानामसत्त्वे हेतुगर्भं विशेषणं—'कर्तृ इत्यादि' कर्त्रादीनां हि विकल्पैकपरमार्थत्वात्, प्रकाशस्य च परप्रमात्रेकात्मकत्वेनाविकल्प्यत्वात् न केनचिदपि व्यपदेशेन व्यपदेष्टुं शक्यते, इति 'नैष शक्तिः' इत्याद्युक्तम् ॥२७॥

न चैतद्युक्तिमात्रशरणम्, अपि त्वागमेनापि सिद्धम्, इति श्रीभर्गशिखां संवादयति ।

न सन्न चासत्सदस-
न्न च तन्नोभयोज्झितम् ।
दुर्विज्ञेया हि सावस्था
किमप्येतदनुत्तरम् ॥२८॥

---

पं० २ ख० पु० पूज्यं प्रति इति पाठः ।

पं० ७ ख० पु० कर्त्रादयो हि इति पाठः, तदनुसारेण शक्यन्ते इति च समुचितः प्रतिभाति ।

अयमित्यवभासो हि
यो भावोऽवच्छिदात्मकः ।
स एव घटवल्लोके
सं‍स्तथा नैष भैरवः ॥२९॥

लोके हि सजातीयव्यावृत्तौ यः कश्चिदर्थः 'अयमिति' पुरोवर्तित्वेनावभासते भावः, स एव 'सत्' इत्यभिधीयते, यथा – घट इति, समनन्तरव्याख्यातस्वरूपः प्रकाशः पुनरनन्तभावनिर्भरो न तथा – महासत्तात्मत्वेनानवच्छिन्नत्वात् नैवंरूपः – सच्छब्दव्यवहार्यो न भवति, इति यावत् ॥२८-२९॥

एवं तर्ह्यसच्छब्दव्यवहार्यो भवेत्? इत्याशंक्याह

असत्त्वं चाप्रकाशत्वं
न कुत्राप्युपयोगिता ।

प्रकाश एव सर्वभावानां परा सत्ता इत्यसत्त्वं नामाप्रकाशत्वमकिंचिद्रूपत्वमुच्यते, यथा – शशवि-

---

पं० २ क० पु० यो भावो वा चिदात्मक इति पाठः ।
पं० ५ क० पु० व्यावृत्ततायाः कश्चनार्थ इति पाठः ।
पं० ८ क० ख० पु० पुनरन्तर्भावेति पाठः ।
पं० ९ क० पु० महासत्तात्मत्वान्नैवमिति पाठः ।
पं० १२ ग० पु० असत्यं चाप्रकाशस्येति पाठः ।

षाणादेः, अत एव च तन्न कुत्रापि कस्यांचिदपि अर्थक्रियायामुपयुक्तम् — न कांचिदप्यर्थक्रियां करोति, इति यावत् ॥

प्रकाशः पुनर्न तथा इत्याह

विश्वस्य जीवितं सत्यं
प्रकाशैकात्मकश्च सः ॥३०॥

विश्वस्य — चेतनाचेतनात्मनः सर्वस्य, पारमार्थिकं जीवितं — स्फुरत्तात्मकत्वेन अनुप्राणकं, नहि तेन विना किंचिदपीदं प्रकाशते, इत्युक्तम् 'प्रकाशैकात्मकश्च' इति — एवमनेकरूपत्वादसच्छब्दव्यवहार्योऽपि, न भवेदिति भावः ॥३०॥

अत एव सदसदात्मापि न, इत्याह

आभ्यामेव तु हेतुभ्यां
न द्वयात्मा न द्वयोज्झितः ।
सर्वात्मना हि भात्येष
केन रूपेण मन्त्र्यताम् ॥३१॥

आभ्यां — समनन्तरोक्ताभ्यामनवच्छिन्नत्वप्रका-

शमानत्वलक्षणाभ्याम्, ननु यद्येवं तर्हि सदसदात्मकरूपद्वयोत्तीर्णः स्यात् ? इत्याशंक्याह 'न द्वयेत्यादि' भावाभावावभासकालेऽपि स एव हि परमवभासते, इति कथं सदसद्भ्यामप्युज्झितः स्यात् ? अत आह 'सर्वात्मना हि भात्येष' इति, – एवमेतत्परप्रमात्रेकात्म भवत्येव अन्यथा ह्यनवच्छिन्नरूपत्वात्कदाचिदपि विकल्पतां न यायात् इति तात्पर्यार्थः, यदुक्तम्

'सतोऽवश्यं परमसत्सच्च तस्मात्परं विभो ।
त्वं चासतः सतश्चान्यस्तेनासि सदसन्मयः ॥'

इति । तथा

'न शान्तमुदितं वापि तव रूपं न मध्यमम् ।
रूपं रूपं तव हरे यन्न केनचिदुच्यते ॥'

इति, अतश्च केन तावत्कल्पितेन रूपेण एतदुच्यते इति न जानीमः, इयं हि दशा विकल्पोपहतबुद्धीनां मायाप्रमातॄणां दुर्विज्ञेया – यथोक्तयुक्त्या ज्ञातुमशक्यैवेत्यर्थः, साक्षात्कृतपरमात्मतत्त्वानामवि-

पं० ५ क० पु० परप्रमाणको भवतीति पाठः ।
पं० १४ क० पु० केन तावत्क्रियते केनेति पाठः ।

कल्पवृत्तीनां पुनरेतत्स्वानुभूतिमात्ररूपपरानन्दचमत्कारघनत्वेन सर्वातिशायि भासते एव, इत्युक्तं 'किमप्येतदनुत्तरम्' इति ॥ ३१ ॥

न केवलमेतदत्रैवोक्तं यावदन्यत्रापि, इत्याह

श्रीमत्त्रिशिरसि प्रोक्तं
परज्ञानस्वरूपकम् ।
शक्त्या गर्भान्तर्वर्तिन्या
शक्तिगर्भं परं पदम् ॥३२॥

'परं ज्ञानं कथं देव' इति देवीप्रश्ननिर्णयार्थं ह्येतदत्र परज्ञानरूपं भगवतोक्तमित्याशयः, तदेव पठति 'शक्त्या' इत्यादि, यदेतत्परं पदं तच्छक्तिगर्भं, शक्तिरेव स्वातन्त्र्यविमर्शादिपदाभिधेया गर्भः सारं यस्य तत्, सा च न तदतिरेकिणी, इत्याह 'शक्त्या गर्भान्तर्वर्तिन्या' इति, यतस्तयैव स्वातन्त्र्याख्यया शक्त्या गर्भोऽन्तरं प्रमात्रैकात्म्यं तस्यान्तः परा काष्ठा तेन वर्तते तच्छीला—तया स्वस्वभावरूपयोपलक्षितमित्यर्थः, अन्यथा ह्यस्य परत्वमेव न स्यात्, यदुक्तम्

पं० ७ क० पु० गर्भान्तवासिन्या इति पाठः ।

'स्वभावमवभासस्य विमर्शं विदुरन्यथा ।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥'

इति, अत एव शक्तौ स्वातन्त्र्यात्मनि स्वभाव एव तिष्ठति—सदैव ताद्रूप्येण वर्तत इत्यर्थः, अत एव शक्तिगर्भ—स्वातन्त्र्यशक्तिमन्तरेण नास्यान्याः शक्तयो विद्यन्ते इत्यर्थः, सैव हि तत्तदेषणीयाद्यर्थोपाधिवशान्नानात्वेन व्यवह्रियत इति भावः, यदुक्तम्

'तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः ।
बहुशक्तित्वमप्यस्य तच्छक्त्यैवावियुक्तता ॥'

इति, तेन 'स्वतन्त्रो बोधः परमार्थः' इत्याद्युक्तनीत्यानवच्छिन्नस्वरूपः स्वातन्त्र्यशाल्यविकल्पकः प्रकाश एव परं तत्त्वम्, इति तात्पर्यम् ॥ ३२ ॥

अत एव च नियतव्यवच्छेदासहिष्णुत्वादेतद्विकल्प्यतां नैति, इत्याह

न भावो नाप्यभावो न
द्वयं वाचामगोचरात् ।
अकथ्यपदवीरूढं
शक्तिस्थं शक्तिवर्जितम् ॥ ३३ ॥

अगोचरादिति भावप्रधानो निर्देशः, तेन वाचामगोचरत्वादकथ्यपदवीरूढमित्यर्थः। एतच्च सर्वमसकृत्त्वेनैव व्याख्यातम्, इति न पुनरायस्तम् ॥३३॥

ये चातोऽवहितास्त एव परं कृतकृत्याः, इत्याह

इति ये रूढसंवित्ति-
परमार्थपवित्रिताः ।
अनुत्तरपथे रूढा-
स्तेऽभ्युपायानियन्त्रिताः ॥ ३४ ॥

इति — उक्तेन गुरूपदेशादिना, रूढा — तदैकात्म्यलाभादापादितप्ररोहा, या संवित्तिः, तस्या यः परमार्थः — सर्वसर्वात्मत्वेन स्फुरणं, तेन पवित्रिताः — भेदविकारकालुष्यापनयनेन परमाद्वयपात्रतामापादिताः, अत एव ते व्यतिरिक्तेन बाह्येनाभ्यन्तरेण वाभ्युपायेन अनियन्त्रिताः — तन्निरपेक्षाः सन्तः, अनुत्तरपथे — पूर्णानन्दचमत्कारघनतया सर्वातिशायिनि चिद्विका-

---

पं० १२ क० पु० विकारकारककालुष्यापनयेनेति पाठः ।
पं० १३ क० पु० तेनाव्यतिरिक्तेनेति पाठः ।

सात्मवृत्तिमार्गे विश्रान्ताः — स्वरसावस्थानेनैव लब्ध-तत्सामरस्या इत्यर्थः, तदुक्तम्,

'यथा स्थितस्तथैवास्स्व मा गा बाह्यमथान्तरम् ।
केवलं चिद्विकासेन विकारनिकराञ्जहि ॥'

इति । तथा

'आनन्दशक्तिविश्रान्तो योगी समरसो भवेत् ।'

इति । तथा

'उपायो नापरः कश्चित्स्वसत्तावगमादृते ।
तामेवानुसरन्योगी स्वस्थो यः स सुखी भवेत् ॥'

इति ॥३४॥

ततश्च किम्? इत्याह

तेषामिदं समाभाति
सर्वतो भावमण्डलम् ।
पुरःस्थमेव संवित्ति-
भैरवाग्निविलापितम् ॥३५॥

तेषाम् — अनुपायसमावेशशालिनां, देहाद्यपेक्षया पुरोऽवभासमानमपि इदं सर्वं भावमण्डलं

'मत्त एवोदितमिदं मय्येव प्रतिबिम्बितम् ।
मदभिन्नमिदं च ……………… ॥'

---

पं० ४ क० पु० केनचिच्चिद्विकासेनेति पाठः ।
पं० ६ क० पु० योगी स परम इति पाठः ।

इत्यादिनीत्या पूर्णसंविन्मयतयैवावभासते इत्यर्थः, यदुक्तम्

'यथा रुमायां पतिताः काष्ठपर्णोपलादयः ।
लवणत्वाय कल्पन्ते तथा भावाश्चिदात्मनि ॥'

इति ॥३५॥

अत एवाह

एतेषां सुखदुःखांश-
शंकातंकविकल्पनाः ।
निर्विकल्पपरावेश-
मात्रशेषत्वमागताः ॥३६॥
एषां न मन्त्रो न ध्यानं
न पूजा नापि कल्पना ।
न समय्यादिकाचार्य-
पर्यन्तः कोऽपि विभ्रमः ॥३७॥

न केवलमेषामविकल्पकावेशमयत्वापत्तेः लौकिक्य एव कल्पनाः न किंचित्, यावदलौकिक्योऽपि, इत्याह 'एषामित्यादि' कल्पना—स्थानादिका ॥ ३६-३७॥

---

पं० ७ क० पु० सुखदुःखानां शङ्केति पाठः ।

पं० ९ क० पु० परामर्शमात्रेति पाठः ।

पं० १३ ग० पु० चर्यापर्यन्त इति पाठान्तरं चास्ति ।

ननु यद्येवं तर्ह्यस्य शेषवृत्तिः कथं स्यात् ? इत्याशंक्याह

समस्तयन्त्रणातन्त्र-
　त्रोटनाटंकधर्मिणः ।
नानुग्रहात्परं किंचि-
　च्छेषवृत्तौ प्रयोजनम् ॥ ३८ ॥

समस्ताः — निखिलाः शास्त्रोक्ता यन्त्रणा — 'इदं कार्यम् इदं न' इत्यादयो नियमाः, ता एव तन्यमानत्वात्तन्त्रं — पटाद्यारम्भकं तन्तुजालं, तस्य त्रोटनायां विच्छेदे, टंकधर्मिणः शस्त्रकल्पस्येत्यर्थः, यथा हि टंकस्तन्त्रं छिनत्ति, तथायमपि अनुपायसमाविष्टः शास्त्रीया यन्त्रणाः — नहि आरूढस्यास्य ततः कश्चित्संकोच इति भावः, शास्त्रं हि आरुरुक्षूनुपदेश्यान्प्रत्येव नियामकम्, इति समनन्तरमेवोक्तम्, अत एव चास्य स्वात्मनि कृतकृत्यत्वात्परानुग्रहार्थमेव वर्तनम् इत्याह

---

पं० ८ ख० पु० तन्यमानत्वात्तन्त्रं पटादि, तत्र त्रोटना अवच्छेदस्तदर्थं, टंकवद्विदारणधर्मिणः शस्त्रकल्पस्येत्येवंविधः पाठः ।

'नानुग्रहादिति' किंचिदिति— समयपरिपालनादि ॥ ३८ ॥

तदाह

स्वं कर्तव्यं किमपि कलयंल्लोक एष प्रयत्ना-
न्नो पारार्थ्यं प्रति घटयते कांचन स्वप्रवृत्तिम् ।
यस्तु ध्वस्ताखिलभवमलो भैरवीभावपूर्णः
कृत्यं तस्य स्फुटमिदमियल्लोककर्तव्यमात्रम् ॥ ३९ ॥

एष लोकः संकुचितः प्रमातृवर्गः तावत्

'............अभिलाषो मलोऽत्र तु ।'

इत्यादिनीत्या लौकिकाणवमलयोगादात्मन्यपूर्णमन्यतया 'किमपि' इति सामान्येन निर्देशात्सर्वमात्मीयं कर्तव्यं, यत्नतः—आकांक्षणीयत्वेन, कलयन्

'तदसिद्धं यदसिद्धेन साध्यते ।'

इत्यादिनीत्या यस्य स्वार्थ एव न सिद्धः स कथं परार्थं प्रत्यपि कांचन स्वल्पामपि स्वप्रवृत्तिं घटयते घटितापि वा तत्प्रवृत्तिर्न किंचित्कुर्यात् इति भावः, यः पुनरनुपायसमाविष्टत्वादेव खिलीकृत-

---

पं० १ ख० पु० पारक्यमिति पाठः ।

निखिलबन्धः, अत एव भैरवीभावेन भगवदद्वयज्ञाना-पत्त्या स्वात्मनि कृतकृत्यत्वेन — आकांक्षणीयस्यैवा-भावात् पूर्णः — अनन्योन्मुखतया स्वात्मन्येव विश्रा-न्तः, तस्येयता निखिलस्य लोकस्य ग्रन्थकर्तव्यमवश्यं कार्यं स्वात्मप्रत्यभिज्ञापनं, तन्मात्रमेवेदं स्फुटम् — अपरिम्लानं कृत्यं — लोकानुग्रह एवास्य कर्तव्य इत्यर्थः, नहि अस्यात्मनि प्राप्तप्राप्तव्यत्वात्किंचित्कर-णीयमस्तीति भावः, यद्गीतं भगवता

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥'

इति ।

'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥'

इति च ॥३६॥

द्विविधाश्च परानुग्रहाः — निर्मलसंविदोऽनिर्मल-संविदश्च, तत्र निर्मलसंविदः प्रति तावन्निरुपकरण-मेवास्यानुग्रहकारित्वम्, इत्याह

पं० १ क० पु० ज्ञेयज्ञानोपपत्त्या इति पाठः ।

तं ये पश्यन्ति ताद्रूप्य-
क्रमेणामलसंविदः ।
तेऽपि तद्रूपिणस्ताव-
त्येवास्यानुग्रहात्मता ॥४०॥

ये पूर्वाभ्यासादिना निर्मलसंविदः, तीव्रतीव्रशक्तिपातभाजो वा, तं—समनन्तरोक्तस्वरूपं, ताद्रूप्यक्रमेण पश्यन्ति 'निरुपायसमावेशभागयम्' इति ज्ञानपूर्वं साक्षात्कुर्वन्ति, अतस्ते परदर्शनमात्रेणैव तत्संवित्संक्रमात्

'······दीपाद्दीपमिवोदितम् ।'

इति वक्ष्यमाणनीत्या निरुपायसमावेशभाक्त्वेन तत्सदृक्षा एव भवन्ति इति शेषः, एवंरूपं सिद्धादिदर्शनं च निरुपायसमावेशे निमित्तम्, इति प्रागेव संवादितम्

'सिद्धानां योगिनीनां च दर्शनम्··········· ।'

इत्यादि, अत एव तावती दर्शनमात्ररूपैवास्य अनुग्रहात्मता, न तु वक्ष्यमाणोपायादिसव्यपेक्षा, इत्यर्थः ॥ ४० ॥

ननु सर्वत्र दीक्षायाः

'........मुक्तिश्च शिवदीक्षया ।'

इत्याद्युक्त्या मुक्तावुपायत्वमुक्तम्, इति कथमत्र दीक्षां विनापि दर्शनमात्रादेव तदवाप्तिरुक्ता? इत्याशंक्याह

एतत्तत्त्वपरिज्ञानं
मुख्यं यागादि कथ्यते ।
दीक्षान्तं विभुना श्रीम-
त्सिद्धयोगीश्वरीमते ॥४१॥

एतस्य समनन्तरोक्तस्य निरुपायात्मनस्तत्त्वस्य परिज्ञानमेव मुख्यया वृत्त्या 'यागहोमादि' श्रीसिद्धयोगीश्वरीमतादौ—सर्वत्रैवागमे 'विभुना' कथ्यते इति संबन्धः, अत एव च बाह्यं यागादि गौणम्—इत्यर्थसिद्धम्, अन्यथा ह्यस्य मुख्यत्वमेव न स्यात्, यदभिप्रायेणैव चर्याक्रमेऽप्येतन्निषिद्धम्, यदुक्तम्

'नास्य मण्डलकुण्डादि किंचिदप्युपयुज्यते ।
न च न्यासादिकं पूर्वं स्नानादि च यथेच्छया ॥'

इति ॥ ४१ ॥

तदेव पठति

---

पं० १४ क० पु० चर्यास्थण्डिलाद्यपि निषिद्धमिति पाठः ।

स्थण्डिलादुत्तरं तूरं
तूरादुत्तरतः पटः ।
पटाद्ध्यानं ततो ध्येयं
ततः स्याद्धारणोत्तरा ॥४२॥

ततोऽपि योगजं रूपं
ततोऽपि ज्ञानमुत्तरम् ।
ज्ञानेन हि महासिद्धो
भवेद्योगीश्वरस्त्विति ॥४३॥

स्थण्डिलं—यागार्थं गृहीतो भूप्रदेशः, तूरं—पात्रादावुत्कीर्ण आकारविशेषः। ज्ञानस्य सर्वोत्कृष्टत्वे हेतुमाह 'ज्ञानेन' इति, ज्ञानेन हि योगिनामपीश्वरः स्यादित्यर्थः, अत एव तदुपोद्बलनार्थं महच्छब्देश्वर-शब्दयोरपि प्रयोगः ॥४२-४३॥

अनिर्मलसंविदः प्रति पुनरस्य सोपकरणमेव अनुग्रहकारित्वम्, इत्याह

सोऽपि स्वातन्त्र्यधाम्ना चे-
दप्यनिर्मलसंविदाम् ।

अनुग्रहं चिकीर्षुस्त-
द्भाविनं विधिमाश्रयेत् ॥४४॥

स्वातन्त्र्यधाम्ना, न पुनः शास्त्रीययन्त्रणया — तत्त्रोटनायाः समनन्तरमेवोक्तत्वात् ॥४४॥

भावी च विधिः कीदृक्? इत्याह

अनुग्राह्यानुसारेण
विचित्रः स च कथ्यते ।
परापराद्युपायौघ-
संकीर्णत्वविभेदतः ॥४५॥

'परापर' इत्येकशेषः, तेन — परः शाम्भवः, अपरः आणवः, परापरः शाक्तः, संकीर्णत्वमुपायान्तरसाहित्यात् ॥४५॥

न केवलमस्य परानुग्रहार्थं भाविविध्याश्रयणमुपयुक्तं, यावत्तदभिधायकं शास्त्राद्यपि, इत्याह

तदर्थमेव चास्यापि
परमेश्वररूपिणः ।

---

पं० ३ क० पु० यन्त्रणायाः तत्त्रोटनस्येति पाठः ।

तदभ्युपायशास्त्रादि-
श्रवणाध्ययनादरः ॥४६॥

न केवलमारुरुक्षूणामेव शास्त्रमुपादेयं यावदस्यापि, इति अपिशब्दार्थः, यदुक्तम्

'शंकाशून्योऽपि तत्त्वज्ञो मुमुक्षुप्रक्रियां प्रति ।
न त्यजेच्छास्त्रमर्यादामित्याज्ञा पारमेश्वरी ॥'

इति ॥४६॥

नन्वेवमुपायमुखप्रेक्षित्वादस्य स्वातन्त्र्यहानिः स्यात्? इत्याशंक्याह

नहि तस्य स्वतन्त्रस्य
क्वापि कुत्रापि खण्डना ।
नानिर्मलचितः पुंसो-
ऽनुग्रहस्त्वनुपायकः ॥४७॥

नहि अस्य आरुरुक्षुवदात्मन्युपायापेक्षा येन स्वातन्त्र्यखण्डना स्यात्, किं तु स्वात्मनि कृतकृत्यत्वात्परार्थमस्य तत्स्वीकारः, यतः परेषामनिर्मलचित्त्वादुपायमन्तरेण न अनुग्रहः सेत्स्यति, इति—भाविविध्याश्रयणाद्यप्युक्तम्, यद्गीतं

'सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥'

इति ॥४७॥

न चैतत्स्वोपज्ञमेवास्माभिरुक्तम्, अपि तु भगवता, पूर्वाचार्यैश्च सर्वत्रैवोक्तम्, इति—निखिलस्य आह्निकार्थस्याविगीततां दर्शयितुमाह

श्रीमदूर्मिमहाशास्त्रे
　सिद्धसंतानरूपके ।
इदमुक्तं तथा श्रीम-
　त्सोमानन्दादिदैशिकैः ॥४८॥

ऊर्मिमहाशास्त्र इति—श्रीमदूर्मिकौलसिद्धसंतानरूपके, इत्यनेन पादोवह्ल्यां पारम्पर्येऽप्यम्लानत्वं दर्शितम्, तत्र हि

'शून्यं न किंचित्तच्छून्यं त्वशून्यं शून्यता नहि ।
यदकिंचित्कथं तद्धि न किंचिच्छेत्तुमर्हति ॥'

इति भगवत्या पृष्टो भगवान्

'आत्मा शून्य इह ज्ञेयः शिवधर्मैर्विनाकृतः ।
शिवः शून्योऽधिगन्तव्यो विमलोऽमूर्तविग्रहः ॥'

इत्याद्युपक्रम्य

'नास्त्यस्ति नास्ति नास्तीति कोटयो न स्पृशन्ति हि ।
वाचामगोचरं यस्मात्तत्तत्त्वमिह कथ्यते ॥
यदभावि न तद्भावि यद्भावि न तदन्यथा ।
एवं विचिन्त्य मतिमान्विकल्पं न समाश्रयेत् ॥
तच्च सर्वगतं सूक्ष्ममुपाधिपरिवर्जितम् ।'

इत्यादिपर्यन्तं बहूक्तवान् । श्रीमत्सोमानन्दादिदैशिकैः उक्तमिति –श्रीशिवदृष्ट्यादौ, यदुक्तं तत्र

'भावनाकरणाभ्यां किं शिवस्य सततोदितेः ।

इति ।

'सकृज्ज्ञाते सुवर्णे किं भावना करणं व्रजेत् ।
एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः ॥
ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ।
करणेन नास्ति कृत्यं क्वापि भावनयापि वा ॥'

इति च ॥४८॥

तदेव सर्वत्रावधातव्यमित्याह

गुरोर्वाक्याद्युक्तिप्रचयरचनोन्मार्जनवशात्
समाश्वासाच्छास्त्रं प्रति समुदिताद्वापि कथितात् ।
विलीने शंकाभ्रे हृदयगगनोद्भासिमहसः
प्रभोः सूर्यस्येव स्पृशत चरणान्ध्वान्तजयिनः ॥४९॥

---

पं० १० क० पु० कारणमिति पाठः ।
पं० १३ क० पु० करणे नास्ति कृत्यं चेति पाठः ।
पं० १५ क० पु० तदेवमत्रापीति पाठः ।

गुरोरित्यादिवाक्यात्सकृदुपदेशाद्यात्मनः 'आत्मैवेश्वरः सर्वज्ञः सर्वकर्ता च' इत्यादिकानां युक्तीनां प्रचयस्य या रचना—परपक्षबाधनस्वपक्षसाधनाधायिका शास्त्रपरिपाटी, तया उन्मार्जनं—बौद्धाज्ञानोत्पुंसनं, तद्वशात्—बौद्धज्ञानोदयेन स्वपरामर्शदाढर्यादित्यर्थः । शास्त्रं—प्रभुसंमितमद्वैतागमं प्रति समाश्वासात्प्रत्ययादिति, व्यस्तात्—गुरुतः शास्त्रतः स्वतः तीव्रतीव्रशक्तिभाजां, यद्वा समुदितात्—समस्तात्कथितात् एतस्मात्त्रयादपि तीव्रमध्यादिशक्तिपातभाजां, शंकाविकल्प एवावारकत्वादभ्रं, तस्मिन्विलीने सति, हृदयं—विमर्श एव अनवच्छिन्नत्वाद्गगनं तत्रोच्चैर्भासनशीलं—ज्ञत्वकर्तृत्वलक्षणं महः तेजो यस्य, अत एव ध्वान्तस्य स्वात्मप्रच्छादनेनोपाश्रितस्य द्वैतप्रथात्मकस्य अज्ञानस्य, जयिनः प्रभोः—विश्वात्मकत्वेन प्रभवनशीलस्य परमात्मनः, चरणान्—चरेर्गत्यर्थत्वादाणवादीनि ज्ञानानि, यूयं—समनन्तरोद्दिष्टाः तीव्रतीव्रादिशक्तिपातभाजः, स्पृशत—यथोत्तरं स्वात्ममयतयैव

---

पं० ७ ख० पु० शास्त्रात् स्वस्माद्यदा तीव्र इति पाठः ।

भावयध्वमित्यर्थः, अत एव चास्य सूर्येणौपम्य-मुक्तं, तस्यापि हि अभ्रे गलिते गगनोद्भासित्वेन अन्धकारं निराकुर्वतः पादस्पर्शः उचितः ॥४९॥

इदानीमाह्निकार्थं श्लोकस्य प्रथमार्धेनोपसंहरति

इदमनुत्तरधामविवेचकं
विगलितौपयिकं कृतमाह्निकम् ॥५०॥

उपाय एवौपयिकमिति शिवम् ॥

तत्तद्ग्रन्थाधिगमो-
पायशतान्वेषणप्रसक्तेन ।
अनुपायाह्निकमेतद्-
व्याख्यातं जयरथेनाशु ॥

इति श्रीमदाचार्याभिनवगुप्तपादविरचिते, श्रीजयरथाचार्यकृतप्रकाशाख्यव्याख्योपेते श्रीतन्त्रालोके अनुपायप्रकाशनं नाम द्वितीयमाह्निकम् ॥२॥

---

एतत्काश्मीरभूपालसंश्रितेन प्रकाशितम् ।
सता मुकुन्दरामेण सन्मुदेऽस्तु शिवेऽर्पितम् ॥

---

पं० ६ क० पु० स्वात्मतयेति पाठः ।

पं० ७ क० पु० जयरथेन चित्रम् इति, ग० पु० जयद्रथेन रचितमिदमिति पाठः ।

This is atonement for the fact that neither will guru jis be available in future nor will there be performers with enough devotion and Shradha for the purpose. The marriage out of cast of my progeny with even Sudras and lack of Yagnopavit to my grand children explains this condition. I do want this purpose to be atoned for by creation of this Small temple and Dharmsala. A tentative plan is here







or Something else designed by Shiban.

The Construction of this temple & Dharmsala should be the job of my Guru Brotherhood and local Biradari. Out of the Sale proceeds of the house Rs 1.5 lacs should be donated to my Guru Brotherhood for this construction. A trust with 3 members from Guru brotherhood and 2 from the local Biradari should be created for the purpose

(2) The house was repaired by dear Yoginder ji Parimoo my Son-in-law in 1987 at a very heavy cost of about Rs 50,000/- This is the first charge on the house and should be honoured as a debt to be paid at once with 10% interest

Seven Marlas of land measuring 30' x 60' have been separated by me last year. In view of the fact that there is going to be little Kriya Karma in future I hereby will that a small temple for (Amriteshwar Maha Mritunjai Lord Shiva) be constructed at the site. I have already brought a suitable Shiva Linga from Omkareshwar for the purpose. It is lying in my bed room in the house at present. In addition to the small temple a dharmsala for public use, temporary (3 days) free stay of Musafirs of ~~any religion any caste~~ of any religion may be built on the site. This will ~~[illegible]~~ do the job of Kriya Karma, Dwadashi and Gaya Shradha not only for me and my wife but for all my forefathers

going to Poona wherein she wants good will and good relations only with her brothers rather than any money or house from me, ~~in~~ after my death.

In View of the above I hereby cancel ~~tear~~ my old will prepared in presence of and in accordance with the wishes of my late wife Shrimati Leela wati Ganju after consultation ~~with both~~ and acceptance by both Makhan Lal ji and Shiban ji. This will willed the Jammu house in favour of Raj according to the wishes of my wife whose Istridhan was mostly utilized in its construction. But since It appears that Dear Makhan Lal ji for reasons best known to him does not now want to fulfil the promise given by both him and Shiban ji to their late lamented mother I hereby leave the question open. If dears Makhan Lal ji and Shiban do not want to fulfil the promise they have given to Bibi they are welcome to appropriate the house or its cost as they like. ~~I~~ All I want is that there should be no litigation or argument wherein Somebody (they, their wives husbands or progeny ~~or Sons~~) will wish hell to me and my wife ~~and~~ I want

that relations and good will to exist for ever between my children and their progeny.

① 1. In view of a talk with dear Makhan Lal ji
wherein he asked me as to why a parent should
have a softer corner for one child vis a vis another,
thereby hinting directly at my will. ~~which said~~
I replied him after some days showing him
that the difference lies not, lie in the behaviour of
the parent but in that of different children. I
showed him clearly how better service and
behaviour got the concerned son or daughter ~~xx~~
rewarded here on this very earth not only
by the parents concerned by by the all pervading
gods themselves,

2. In view of a message recieved from dear Buthari ji
Via (Zutshis Bombay, Kachrus N. Delhi and Zutshis
Baroda) reg ~~[illegible]~~ my will,

3. In view of another talk with dear Makhan ji in
which he expressed that I was paying large
amounts to Raj. The source of the money best
known to Shri Makhan Lal ji, I am living
hand to mouth with occasional help from dear
Shivan ji; Shri Makhan Lal ji having never felt
any necessity to serve me excepting 2 dresses
every year for the last 8-10 years. Needless to mention
that while at Poona I have to dole out something
to him as he always shows himself penniless.

4. In view of a recent letter from Raj after her

Shri Swami ji (Paduka) Kharawon should adorne the small temple along with the Shiva linga mentioned above. The Guru Paduka has the property of grant of any request made to it. So the best place for it will be a suitable place in the temple where people can worship it. The T.V. & fridge at Srinagar blong [belong] to Mr Y Parimoo to whom these should be returned. The house at Nishat (Ishaber) is not mine. I am only a Vangay in The house belonging to Shiban along with the land. ~~His name~~ It already stands in his name. My body may be burnt, given to a hospital for research or disposed off as Shri Makhan ji ~~g~~ thinks fit. It is dust not me no doubt a trust from Lord Shiva as long as He and He alone wants me to use it. I should be clothed for my last journey with the clothes given to me by Shri Swami ji & white cloth dipped at Ishaber

[signature]

25/5/1988

(3)

Mr Sapru (Brij Lal) Engineer living in Bhagwati Nagar and Pt Brij Lal Bath should be the first 2 members of the trust alternating as president for ~~3~~ 2 years each. The others being: Pt Pusker Nath Kasid, Mr Ramswarup and Pt Mohan Lal Ji Tikoo.

For my other assets all removable property (excepting my books and Puja material) should go to Pt Makhan Lal Ji alone. Some National Saving Certificates and Unit trust certificates lying ~~to~~ in the Jammu bank (city chowk) locker ~~along with all gold in~~ should be given to the concerned nominees (This is their money only invested by me.*). 4 golden Karas in Delhi locker are for [illegible] & Indira. The golden kara in Jammu locker should be given to ~~Anuradha~~ Sumeena (one such kara was given in dowry to Rag) ~~she~~ so she should give one kara each to Anuradha ~~[illegible]~~ and Sumeena. The rest of the gold in the locker is for Mrs Ashutosh & Rag so share equally.

My books should be ~~g~~ given to my Guru Brotherhood and stored in the first floor of the Dharamsala

* Rs 25000/- belonging to Rag are on loan with [illegible] on interest. This has been personal money only & should be paid back with interest.

Shall be a debt to be paid to you
along with 10% interest (compound)
per year at the time of sale
in my presence or otherwise.